Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

श्वःपितुःश्राद्धंकरिष्येहंनचंडिके चंड्युवाच प्रभातेतेपितुःश्राद्धंकरिष्येहंयथोचि
तम् श्वशुरस्ययथातृप्तिर्भविष्यतिसुखान्विता ६५ उद्दालकउवाच नरात्रौब्राह्मण
महंगच्छाम्यामंत्रितुंक्वचित् काणंखंजंश्यामदंतंकुब्जंविप्रंनिमंत्रये ६६ मूर्खंसूचकंप्रीतंवेदहीं
नमवैष्णवम् व्यंगंधूर्तंरतंनष्टंसरोगंवृषलीपतिम् ६७ चंड्युवाच अहंद्विजोत्त-
मान्विप्रान्वेदशास्त्रपरायणान् कुलीनान्संमतान्सुतपौत्रभार्यासमन्वितान् ६८ आमंत्रयि
त्वाद्यनिशिप्रभातेतान्समानये नत्वदीयंवचस्तथ्यंकरिष्यामिकदाचन ६९ उद्दालकउ
वाच यदिश्राद्धंगृहेदेवक्रियतेचंडिमंदिरे मदीयंवाक्यमुल्लंघ्यतन्नमेसुखदायकम् ७०
अत्रार्हीयानिधान्यानितान्येवाहंसमानये श्रद्धयारहितंश्राद्धंकरिष्येचंडिनान्यथा ७१ चण
कानाहरिष्यामिकोद्रवान्वर्तुलानपि मसूरान्राजमाषांश्चकुलित्थानाढकीःपुनः ७२ यावनाला
श्चनिष्पावान्वरटांश्चमटानपि खर्जूरकांश्चित्रपत्रान्श्राद्धेशाकंचकुत्सितम् ७३ वृंताकंदिकंगृंज
रंचचिल्लीकोशातकीफलम् कूष्मांडकंकलिंगंचपिंडीपिंडालकंतथा ७४ अलाबुंवर्तुलंझिंटीतं
दुलीयंचपल्लवम् चंड्युवाच गोधूमांस्तंडुलान्मुद्गान्माषांश्चैवमनोरमान् ७५ आ
नेष्याहंकरिष्यामिपायसंमंडकानपि मोदकान्फेणिकारम्याभक्तकुमुदसन्निभम् ७६ गव्यंघृतंत
थाक्षीरंसितारंभाफलानिच सहकारंरसंस्वादुप्रियांशिखरिणींगृहे ७७ कालेचकुतपेश्राद्धंश्रद्धा
युक्तंसवस्त्रकम् सदक्षिणंपूतशाकंधेनुदानेनसंयुतम् ७८ इतिचंडीवचःश्रुत्वामुनिःप्रोवाच
तांप्रियाम् उद्दालकउवाच प्रसभंक्रियतेश्राद्धंपितॄणांतन्नमेहितम् ७९ अहं
निर्लीमयंवस्त्रंपरितःपातयेगृहे दुष्टतैलेनदीपांश्चकर्तास्म्यस्मत्कृतेच्छया ८० चंड्युवाच
मनोरमंगृहंकुर्यांतिलतैलेनदीपकान् मयाकृतेःसितैर्वस्त्रैस्तादृशैःपरिवर्जितम् ८१
जैमिनिरुवाच ततोविप्रःप्रसन्नात्माचेतसानबहिःस्थितः तयायुक्तःपितुःश्राद्ध

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



सर्वंचक्रेनराधिप ८२ यावद्भुक्ताद्विजाःसर्वेयावद्दत्तंधनंतथा वस्त्रादिकंस्वयंभुक्तःसावंडीनतदा
नृप ८३ तावद्वाह्यागसेमोह्यादिदंवचनमब्रवीत् उद्दालकउवाच गृहीत्वाचंडिस्फुटंकंपिंडा
नांजान्हवीजले ८४ स्वपूजितंपातयाशुश्रुत्वासागोमयावटे पिंडांश्चिक्षेपवेगेनसमुनिःकोपपू
रितः ८५ तांशशापशिलादुष्टेभविष्यसिममाज्ञया चिरकालंहयस्यांगस्पृष्ट्वामुक्ताभविष्यसि ८६
यज्ञार्थंभ्रममाणस्यसेयंपार्थमहाशिला इमांमोचयभद्रंतेकरस्पर्शान्महाबल ८७ कृतंपार्थेनतत्स
र्वंमुक्तःसतुरगोऽयंयो चंडीशापभयान्मुक्ताअंगस्पर्शात्तदाहरेः उद्दालकोऋषिवरःपत्न्यासहमुमो
दह ८८ इत्याश्वमेधिकेपर्वणिजैमिनीयेशिलामोक्षोनामषोडशोऽध्यायः १६ छ
जैमिनिरुवाच मुक्तःसतुरगःशीघ्रंप्रययौचंपकापुरीम् हंसध्वजेनवीरेणपालितांप्रमदासि
व १ पृष्ठतोस्यजगामाशुकुंतीपुत्रोधनंजयः वीरैःपरिवृतोघोरैःप्रद्युम्नप्रमुखैर्नरैः २ मुक्तामाला
वृतैर्दिव्यैर्वासोभिर्वेष्टितैःशुभैः ततोहंसध्वजोराजाश्रुत्वादूतमुखाद्धयम् ३ प्राप्तंस्वविषये-
वीरैःपालयंतंतुरंगमम् चिंतयामाससचिवैःसार्द्धंबंधुभिरात्मजैः ४ हंसध्वजउवाच
किंपार्थतुरगश्चास्यगृह्णामिस्वबलाद्रणे व्यूह्यसैन्यंस्वविषयंपालयामिमहाबलात् ५ महालाभ
श्चभवितादृश्यतेहरिसेवकः यत्रार्जुनस्तत्रहरिःस्वयंतिष्ठत्यसंशयम् ६ नमयावीक्षितःकृष्णो
वृद्धेनापिस्वचक्षुषा तस्मान्निर्यांतुमेवीरायुद्धार्थंयाम्यहंरणम् ७ जैमिनिरुवाच त
तोहंसध्वजोराजाप्याजगाममुदान्वितः सप्ततिंनायकानांसगृहीत्वाप्रमुखेस्थितः ८ नायकैर्ना
यकैःसैन्यंयत्नेनपरिरक्षितम् तच्छृणुष्वमहीपालपुष्टंसाजधनैःसदा ९ गजानांभूरिमत्तानांसह
स्राण्येकसप्ततिः रथानामपिनद्धानांसहस्राण्येकसप्ततिः १० हयानामपिरूढानांलक्षंचैवाति
भास्वरम् पदातीनांसहस्राणियूनांत्रिनवतिर्नव ११ सर्वेनैर्वैष्णवावीराः सदादानपराय
णाः एकपत्नीव्रतयुताःसमतास्तेऽपिसंवदाः १२ समायतंजनंक्वापिसेवितुंतंजनाधिपम् दू



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

रदेशादपिप्राप्तंराजातंपरिपृच्छति १३ एकपत्नीव्रतंतातयदितेविद्यतेऽनघ ततस्त्वांधारयिष्यामि
सत्यमेतद्ब्रवीमिते १४ नशौर्येनकुलीनत्वेनचक्षमापिपराक्रमः स्वदाररसिकंवीरंविष्णुभक्तिसम-
न्वितम् १५ वासयामिगृहेराष्ट्रेतथान्येऽपिहिसैनिकाः अनंगवेगस्त्वंतेयेधारयंतिमहाबलाः १६
जैमिनिरुवाच प्रददातिधनंभूरिस्वभृत्येभ्योयथोचितम् सुमतिःसुगतिस्तुष्टःश्रद्धालुस्त
स्यनायकाः १७ सचिवाःपातितसैन्ययथाभूतंनृपस्यतु भ्रातरश्चापिबलिनोविदूरथमुखाहिते
१८ चंद्रसेनश्चंद्रकेतुश्चंद्रसेनोमहाबलाः पुत्रास्तस्यपरंपंचसुबलःसुरथःसमः १९ सुदर्शनःपं
चमश्चसुधन्वापिमहाबलः एवंविधेनसैन्येनस्थितःपार्थबलंप्रति २० हंसकेतुस्ततःसैन्यंव्यूहया
माससत्वरः दुंदुभिंताडयामासगजारूढोजगामसः २१ निर्गच्छंततनोवीरास्तेनाज्ञप्ताःपुराद्बहिः
कश्चित्कवचमादायपूजयामासमारिष २२ नानिशस्त्राणिचास्त्राणिहुत्वाचैवहुताशनम् तथान्ये
निर्गतावीराःसर्वेतस्मिन्सहसा २३ भोजयित्वाद्विजगणान्पायसेनघृतेनच निर्ययुस्तेरथैरेव
गजैर्मत्तैस्तथापरे २४ हयैरन्येप्रार्थयंतस्तत्रयुद्धंभयानकम् चामरच्छत्रिणःसर्वेसिंहनादंप्र
चक्रिरे २५ तेषांप्रियाःस्थिताःसर्वाःप्रासादमधिकौतुकम् प्रासादस्थाश्चपश्यंत्यःप्रब्रुवंत्यश्च
शोभनम् २६ काचिज्जगादवाक्यंतुप्रियांतांसुंदरींप्रति सखियुद्धेमयात्वेषभर्तानिकेशवार्जुनौ
२७ अधरेतवकिंभद्रेकृष्णोयंदृश्यतेव्रणः तत्कथंलज्जसेनैवभवतीव्रणदर्शनात् २८ तामुवा-
चापरातन्वीमाधवंनतवाधरः समुच्चरतिदुष्टेसौभर्तायुक्तंप्रशासति २९ एतज्ज्ञानंसुंदरंमे-
विकीर्णास्तेकथंकचाः पररंध्रेषुसर्वेषांदृष्टिर्गच्छत्यचेतसाम् ३० धीमतांसुकृतेयातिनात्रका
र्याविचारणा वरंसाधुसमीपेहिकृच्छ्रेणवसतांनृणाम् ३१ नराज्यंत्वसतांपार्श्वेधिक्राज्यंहिस
तोविना एतच्छ्रुत्वावचस्तस्यास्तदासागजगामिनी ३२ प्रत्युवाचहसंतीवमूढेकृष्णानपश्यसि त्व
यामयात्रज्ञातव्यंकिमप्यत्रमहारणे ३३ ललाटंसव्रणंपश्यहंसगद्गदभाषिणि सर्वत्रभावलाभा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

जै॰अ॰
३५

र्थैनराःकुर्वंतिरक्षणम् ३४ स्त्रीशरीरमिदंमूढेतत्त्ववेत्सिनचात्मनः इमांपृच्छामिस्फदतींपरंकौतू
हलंहिमे ३५ चंदनंवरमाल्यानिवासांसिरुचिराणिच परिम्लानानिमंदायाःकिमेतत्कारणंवद ३६
स्कंदउवाच ललाटंसव्रणंमन्येभद्रायाःसुखिमंडितम् कृष्णेनात्रपदंदत्तंवदंतिकिलयोगिनः ३७
नवक्तव्यंपुनश्चैवंपांडवस्यतुरंगमम् गृहीतुंयांतिकुशलामरालध्वजसैनिकाः ३८ जैमिनिरुवा
च ततोदुंदुभिनादेननिर्गताःक्षत्रियारणे नीतःकटाहस्तैलेनपूरितोराजशासनात् ३९ ननिर्गच्छ
तियःकश्चित्कटाहेतैलपूरिते पात्यतेज्वलितेघोरेनस्तात्पुत्रसहोदराः ४० आज्ञाभंगोनरेंद्राणांविप्राणां
मानखंडनम् पृथक्शय्याचनारीणामशस्त्रवधउच्यते ४१ आज्ञाभंगंनरेंद्राणांनकरोतिनरःक्वचि
त् शंखंपुरोहितंचक्रेतेनायंतीव्रशासनः ४२ राज्ञःपुरोहितश्चास्यनीतिशास्त्रविशारदः फलान्य
पहृतान्यासन्भ्रातुस्तेनमहात्मना ४३ छिन्नंबाहुयुगंतस्यलिखितामाज्ञाविचिंत्यताम् पुरोहितवशा-
द्राजानीतिज्ञःसर्वदाक्षराम् ४४ सम्यक्पालयमानोसौरणेजेतापरान्स्थितान् एवंविधंकटाहंतं
विलोक्यनृपशासनात् ४५ सुधन्वाप्रथमंपुत्रोनिर्ययौनृपतिंप्रति नमस्कृत्याथजननींगृहीत्वापरमं
धनुः ४६ अवदन्मातरंयुद्धे पार्थंगच्छामियोधितुम् हरिंतमानयिष्यामिरक्षितंपांडवेनहि ४७
मातोवाच गच्छपुत्रहरिंयुद्धाद्विजित्यममसन्निधौ हरिंचतुष्पदंत्यक्त्वातंसमानयमुक्तिदम्
४८ बहुधानारदःप्राहतस्यरूपमस्यचेष्टितम् मद्भर्त्रादिजनावीराबहवोपिरणांगणे ४९ नचैकःकं-
सहंतायंभुविदृष्टःस्वचक्षुषा रात्रिंदिवाहरिंभूत्वेतंपश्यामितथाकुरु ५० बहुधाकुरुतत्कर्मयेननतु-
ष्यतिकेशवः नत्वयंवशतामेतिदूराद्दूरंपलायते ५१ चक्षुर्विषयमापन्नःपश्यभाग्यंमहाबलः पार्थं
धारयभद्रंतेवशगस्तेहरिर्भवेत् ५२ स्वभक्तंनत्यजत्येषमनाक्पुत्रमयाश्रुतम् यथावनगतंवत्सं
त्यक्त्वानायातिसौरभी ५३ तथापत्स्फनकृष्णोपिस्वजनंपरिमुंचति तदयंनभयंकार्यंकृष्णाद्भीतो
नजीवति ५४ प्रहसिष्यंतिमांसर्वेलोकाःसंबंधिनस्तथा तवभद्रेस्फतःकृष्णंनिरीक्ष्यविमुखंबाण





Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri
CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

वत् ५५ तथाविधंनकर्तव्यंपुत्रस्त्वकभाषितम् मयाद्यहर्षः क्रियतेपतनेतव्रपुत्रक ५६ यत्तुलोक
विरुद्धंचपुत्रंप्रतिभवेद्वचः नचैतस्मिमदीयेत्रजायतेलोकभाषितम् ५७ रोदंतपुत्रकाः सर्वाः कुर्वंतु
भुवियोषितः यासांपुत्राश्चपौत्राश्चनव्रजंतिहरिंप्रति ५८ सुधन्वोवाच सर्वंतेभाषि
तंमातःकरिष्येहरिमानये पौरुषंहिमयाकार्यंजयोदैवेप्रतिष्ठितः ५९ नवोदरेनसंजातस्तत्रचे
त्केशवंप्रक्रमम् विलोक्यविमुखोभूयागच्छेयंसदुर्गतिंनहि ६० जैमिनिरुवाच एता
वदुक्त्वावचनंयावदुच्छतिवीर्यवान् तावन्नीराजितःसम्यकृतयाकुवलयानृप ६१ लाजाभिःसु
मनोभिश्चगंधैश्चोच्चैःपुनःपुनः कंठेमालांपातयित्वाभगिनीवाक्यमब्रवीत् ६२ कुव
लोवाच योद्धुंधनंजयंयासिसाधुयोधयबांधव दारुणोममवासोऽयंश्वशुरस्यगृहेस
दा ६३ ज्येष्ठादयोहसंतीमेदेवराश्चप्रहासिनः मांतत्रनिवसंतींतुयज्ञगुरुस्तत्परंशृणु ६४ कु
वलेजनकस्तेयंमूर्खएवोपलक्ष्यते ब्रूतेकृष्णंप्रजेष्यामियथाकाशीश्वरोजितः ६५ सदेहेन
नशक्नोतिबलेनसहितःपुरीम् रम्यांद्वारवतींमंदोगंतुंजेतुंतमिच्छति ६६ सुधन्वोवा
च कुवलेपितृवाक्यंतद्देवराणांचभाषितम् सर्वंसत्यंकरिष्यामिसत्येनायुधमालभे ६७
नमस्कृत्यात्रभवतींरणेयामिहरिंप्रति एतावदुक्त्वावचनंबाह्यांकक्षामगात्तदा ६८ ततोददर्श
तांदेवींचारुनेत्रपयोधराम् अग्रतश्चंदनयुतांसहितांचद्रकेणतु ६९ सांभोजेश्चापकैःपात्रैःकां
चनस्यप्रदीपकम् गृहीत्वासंस्थितातन्वीछन्नदूर्वाक्षतैरपि ७० कर्पूरपुलकोद्भूतैर्दीपैःपंचशि
खैर्नवैः सारणद्भलयावालाचारुनूपुरमेखला ७१ कौशेयंबिभ्रतीशुभ्रंकंचुकींपुष्परागिणीम्
मुक्तामालांसुकंठेचसुस्वरागंतथारुणम् ७२ अर्चयामासतंवीरंपतिंपतिपरायणा निरीक्षंती
चभर्तारंतदाहस्यातिवक्रया ७३ तथाविधेनपात्रेणपुनर्नीराजयत्यसौ नीराजयित्वास्वंकां
तंप्रत्युवाचमनस्विनी ७४ प्रभावत्युवाच पश्यामिवदनंनाथकृष्णादर्शन

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





लालसम् तावकं मां परित्यज्य कुतो यास्यसि वेक्षणम् ७५ एकपत्नीव्रतेनैव न पश्यामि सांप्रतम् यया वृतोसि या यासि सा न तुल्या भवेन्मम ७६ सा सर्वगामिनी ते भ्रान्ता सद्भिः कस्मात्सवर्ण्यते पिता गच्छति यामेव पुत्रस्तामेव गच्छति ७७ ईदृशी हृदये मुक्तिस्तव जागर्ति सर्वदा तां प्रदास्य नि गोविंदो मलागच्छसि सत्वरम् ७८ पुंसां चित्तं क्षणं याति क्रूरनारीनिषेवणे विवेकोनैव जनितः पुत्रस्तस्मात्किमाहवे ७९ लौल्याद्गच्छसि कृष्णाग्रे हरिं वीक्ष्य न सा प्रिया भविन्नीति महाबाहो प्रियैकाहं पुनर्गृहे ८० मम संगात्त्वया लब्धो विवेकाख्यो हि पुत्रकः विवेकस्त्वां तु गच्छंतं न वारयति देहजः ८१ यथा नरो परां याति तथा नारी न गच्छति गते त्वयि गमिष्यामि मोक्षं चेन्न त्वसोपरः ८२ विवेकस्कत संपन्नां मां गृहीत्वा भविष्यसि संसारेऽस्मिन्महाघोरे कृतकृत्यो न संशयः ८३ विवेकारक्ष्यते नित्यं मम नाथ कलेवरम् अन्या नार्योपि गच्छंति विवेकरहिताः परम् ८४ बालत्वे जनितः पुत्रो विवेकस्तेन कश्मलम् विंदाम्यहं व्रजंती तत्कैवल्यं प्रतिमार्हिषु ८५ गते त्वयि गमिष्यामि मोक्षं वीर त्वया सह वक्रं वक्रं प्रवर्तव्यं धन्ये धन्यं समाचरेत ८६ आदावेव गमिष्यामि चिंतयंतीत वाननम् मुक्तिस्त्वां तु हसंतीव भयान्मम महामते ८७ स्वनारीं यः परित्यज्य प्रार्थयत्येष मामिति साध्वीं तथा विधां भूमौ विवेकेनाहृतां नृप ॥ ८८ नाथ श्रद्धां न पश्यामि तव भावप्रवर्तिनीम् कथिता सा यया मुक्तिरर्चनान्माधवस्य तु ८९ पादौ तस्याः पतनीयौ छित्वा नूनं मया नृप स्वमंदिरं यथा चेयं न गच्छति परं जनम् ९० श्रेयो हि भाषितं तस्या विविधं चौषधं हितम् विना कृष्णाश्रयादन्यं कथयिष्यति कारणम् ९१ सुख मस्या भूतं विद्धि पांसुभिर्हरिसंभवैः एवं संचिंत्य गच्छाशु यत्र गंतुं समुद्यतः ९२ स धन्वोवाच प्राप्यते सा मया भद्रे त्वत्संगान्नात्र संशयः मत्पौरुषमतिक्रम्य वचः प्रोक्तमिदं त्वया ९३ वचसा नेनमे कामस्तिष्ठन्नपि विनिर्गतः यो हं प्रयामि तं कृष्णं मोक्षं प्राप्तुं हि शोभने ९४ चंदनं वरवासांसि कांचनं रत्नसंचयम् शरीरं चापि मे चित्तं त्वत्का गच्छतु भामिनि ९५ यद्यहं तां पुरावे

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

ष्मिकेवत्यरसिकांगृहे विवेकोत्पादनेयत्नंनकुर्तास्तादृशीप्रति ९६ प्रभावत्युवाच ना
थगच्छसिसंग्रामेपार्थयोद्धुंमहाबलम् विवेकाख्योपितनयोहृदयेममतिष्ठति ९७ मत्वेन्मूर्तिंदं
र्शयतिस्तातथाकुरुमेप्रियम् जलदंनात्रपश्यामिसुतस्मात्तादृगतेलधि ९८ सुधन्वोवाच
निरीक्ष्यकृष्णंपार्थंचपुनरायामितेंतिकम् विजित्यपंचभिर्बाणैः सर्वगोतोप्रभावति ९९ प्रभा
वत्युवाच येप्राप्तामाधवंद्रष्टुं दृष्टोयैर्मधुसूदनः नयांतितेपुनरपिसंसारेऽस्मिन्कदाचन १००
तस्मियावचनंश्रुत्वासुधन्वावाक्यमब्रवीत् यदिजानासिदेवित्वंकृष्णस्यकिलदर्शनात् १ पुनरागम
नंनास्तिजलदंयाचसेवृथा प्रभावत्युवाच प्राप्नुवंतिपदंविष्णोस्तएवसुतसंयुताः २
सुतानुत्पाद्यसंप्राप्तौदेवतौशुकनारदौ सुतानंननपश्यंतिज्ञेयास्तेऋणिनोभुवि ३ पराशांसफ
लांकृत्वायेव्रजंतिहिसाधवः तेषांचिंतितकार्याणिजायंतेनात्रसंशयः ४ पराशांविफलांकृत्वा
येव्रजंतिधरातले तेषांचिंतितकार्याणिनसिद्ध्यंतिकदाचन ५ सुधन्वोवाच रा
जानंकिंनजानासिभद्रेत्वंतीव्रशासनम् एषघोरःसमयदोरोरवीतिचदुंदुभिः ६ कटाहंतैल
संपूर्णंकृतसंबलनिर्गमे क्षेप्तव्यस्तत्रशीघ्रंयोनायातिरणमंडले ७ रात्रौयद्दीयतेदुविक्रतुदा
नंकृतप्रदम् साधवोनप्रशंसंतिदिवास्त्रीसंगमंक्वचित् ८ सर्वेविनिर्गतावीरायोद्धुंपित्राज्ञया
र्जुनम् प्रभावत्युवाच सरागांमामजित्वाग्रेयदिगंतुंत्वमिच्छसि ९ अनंगेनाहृतामे
कामंगैर्बहुभिरावृताम् कथंसेनांभवान्जेतुंदिवाधीरोभविष्यति १० कृष्णास्यपुरतोवीरैःका
लांतकयमोपमैः गतिःकानागतेनूनंत्वयिनाथेह्यमामकी ११ सुधन्वोवाच मैवं
वदविशालाक्षिदिवसाःसंतितेबले बहवोपिरणेपार्थोनायंपुनरवेक्षते १२ प्रभावत्यु
वाच षोडशांयंचदिवसोममनाथव्यवस्थितः ऋतुभंगात्तुयत्पापंतत्त्वयाज्ञायतेप्रभो १३
पितुःश्राद्धेषोडशेवेदिवसेऋतुपूरिते एकादशीव्रततद्वत्रितयंसंगतंभवेत् १४ किंकर्तव्यं

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





महाबुद्धे संशयेस्मिन्सदानृभिः धर्मः सूक्ष्मोतिगहनः शक्यते केन वर्तितुम् १५ सुधन्वोवा
च निर्णीतं विद्यते देवि ऋषिभिर्धर्मसंकटे सांवत्सरं तु तातस्य कर्तव्यं भावसंयुतम् १६ आत्रा
यान्नां निशामध्ये कुर्वीत व्रतमुत्तमम् प्रियायै ऋतुदानं हि प्रदेयं धीमता गृहे १७ धर्मशास्त्रेषु निर्णीतं
पुरा धर्मार्थकोविदैः सांवत्सरं तु वै श्राद्धं कर्तव्यं पितृभक्तितः १८ एकादशीव्रतं चापि कृष्णभक्तिस
मन्वितैः ऋतुदानं हि कर्तव्यमर्द्धरात्रात्परं नरैः १९ एष एव परो धर्मो गृहस्थानां वरानने सुधन्वनो
वचः श्रुत्वा वाक्यमाह प्रभावती २० पिता तवाह वै भाति व्रतमद्य न विद्यते ऋतुदानं ततो नाथ दत्वा या
हि रणे हरिम् २१ जैमिनिरुवाच एतावदुक्त्वा वचनं प्राणनाथं महाबलम् उभा
भ्यामपि हस्ताभ्यां कोमलाभ्यां वरानना २२ तं कंठे धारयामास शालवल्लीव कानने नशशाक ततो
गंतुं प्रियाबाहुनियंत्रितः २३ विमुच्य कवचं भूमौ किरीटं च हसन्नपि तया सह दिवा रेमे शयने रत्नमंड
ते २४ गर्भं दधौ विशालाक्षी सुस्नातो भूत्स भारत सुधन्वा रथमारुह्य यावद्गच्छति मंदिरात् २५
तावद्रणे हंसकेतुर्बलाध्यक्षमुवाच ह हंसध्वज उवाच सर्वे वीरा इहायाताः श्रुत्वाना
दं च दुंदुभेः २६ सुधन्वानं न पश्यामि रणमध्ये समागतम् ममाज्ञां किं न जानाति कदाहो विस्मृतः
कथम् २७ प्रयाणदुंदुभिरयं लंघितः पुत्रकेण मे बालेन संस्थितस्तूष्णीं समग्रेणाहूतो मम २८
हरयो मे हरिष्यंति सागजा मत्ता धनंजयम् सुधन्वना पृष्ठतः किं क्रियते कर्म कुत्सितम् २९ तस्मात्
गच्छंतु यवनाः सबला सुदुराग्निताः केशेष्वाकृष्य तं दुष्टं विकृष्यं तु धरातले ३० आनयंतु कटा
हस्य पार्श्वे कृष्णपराङ्मुखं जैमिनिरुवाच तेनाज्ञप्तास्ततो राजन्यवनाः शीघ्रकारि
णः ३१ जग्मुस्तन्मंदिरं रम्यं रत्नचित्रं सुधन्वनः ददृशुस्ते समायांतं भुक्तभोगं नृपात्मजम् ३२ प्रो
चुस्तच्छासनं भर्तुर्वज्रपातोपमं तदा यवना ऊचुः वयं प्राप्ता महाबाहो ग्रहणे तव मारिष
३३ आज्ञाभंगः किमर्थं हि नृपतेस्तस्य कारितः स्थितोसि पृष्ठतो नूनं त्वया सर्वं हि वंचितम् ३४ पि



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

त्रातववयंसर्वेप्रेषितास्मबलादितः नेतुंत्वांसंगरेमंदंविकृष्यत्वंधरातले ३५ उत्तिष्ठयाहिनृपतिंपार्थसैन्यनिवारकम् पद्मव्यूहसमाश्रित्ययुद्धशौंडैःसमावृतम् ३६ जैमिनिरुवाच कुपितंवचनंतेषांज्ञात्वास्वजनकंविभुम् सहैवतैःप्रयातोग्रेरथमास्थायतद्बलम् ३७ ससुद्रमिवपर्यातंसमंताद्योजनत्रयम् ददर्शपितरंवीरोधनंजयजयोत्सुकम् ३८ कुपितंपितरंवीक्ष्यनमस्कृत्यपुरःस्थितः सुधन्वाननततोराजाप्रत्युवाचरुषान्वितः ३९ हंसध्वजउवाच किमर्थंशासनंवीरमदीयंलंघितंत्वया सुधन्वोवाच जलदंतेवधूर्गेहेमत्तोयाचितुमुद्यता तस्मात्स्थिरायितंराजन्प्रयाणेस्मिन्मयाविभो ४० हंसध्वजउवाच ध्रुवंमूर्खतरस्त्वंहियदिकृष्णोत्वसंमुखः नदृष्टःसंगरेसाक्षात्त्वयानोवंचितंकुलम् ४१ सुप्रियायैभवान्दत्वाजलदंनिर्गतःपुरात् नतेनपूर्वजानांतेतृप्तिःपूर्णाप्रजायते ४२ नत्वदीयामदीयात्रजलदेनह्यरविना वरुणस्यापिनोशक्तिःपिपासापूरणेनृणाम् ४३ हयंपालयितुंप्राप्तःसव्यसाचीमहाबलः क्षणमेकंजगन्नाथोनुसंचतिरणेर्जुनम् ४४ धिक्तेबलंधिग्विचारोधिग्धर्मोयत्वयाकृतः श्रुत्वाकृष्णपुरप्राप्तंकथंकामेगतंमनः ४५ एवंविधंकृष्णपराङ्मुखंत्वांतसेकटाहेकिलनिक्षिपामि मलीमसंकामरतंकुपुत्रमाकंठमग्नंतिलतैलपूर्णे ४६ गच्छंतुदूतामुनिसन्निधौतुपुरोहितंमेलिखितंचशंखम् तयोःपुरःसर्वमिदंनिवेद्यपृच्छंतुतन्द्भाषितमेवकर्ता ४७ तयोर्वचोनैवमयाविलंघ्यस्त्वजीविताद्राज्यहरादवश्यम् कुर्वंतुतसपुनरेवतैलंपश्यंत्वपार्थप्रमुखामममाज्ञाम् ४८ जैमिनिरुवाच एवंतेनमहीपेनप्रेरिताःशब्दकारिणः जग्मुःप्रष्टुंमुनीद्रौतौध्यानतरौतत्पुरोहितौ ५० दूताऊचुः नृपःपृच्छतिवांकिंचित्संशयंधर्मसंकटे सुधन्वनास्थितंपृष्ठेनृपाज्ञाचविलंघिता ५१ जलदंदातुकामेननद्रूतनःपुरोहितौ किंकर्तव्यंमयातस्यपापिष्ठस्यसुधन्वनः ५२ कटाहस्यसमीपेतुबलादेवसुतंप्रभुः आनीयतंपातयिताभवद्यासनियोजितः ५३ तैलेतंसेपरित्यज्यपुत्रस्ने

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



हंनसंशयः  लिखितउवाच  गच्छंतुदूतानृपतिंशंसंतुममभाषितम् ५४ स्ववचोयोनमं
दात्मासत्यंकुर्यान्महीतले भयाल्लोभाच्चनरकेचिरंतिष्ठतिदारुणे ५५ कौशिकायददौराज्यंहरि-
श्चंद्रोमहामतिः क्रीतौभार्यासुतौतेन स्वसत्यंपरिपालितम् ५६ हंतुंप्रियांस्थितोराजारम्येभा
गीरथीतटे शरणस्थांपुत्रगात्रान्मृताद्वस्त्रंजहारसः ५७ रामंप्रव्राजयामासवनंदशरथःपुरा
स्वकंवचःकृतंसत्यंकैकेय्यैयदुदाहृतम् ५८ असुनायत्पुराप्रोक्तंपुत्रंपौत्रंसहोदरं आज्ञाभंगकरं
तैलेसुतप्तेपातयाम्यहम् ५९ तदन्यथाभवेदेवंयावत्सुधन्वानपात्यते विमुखःकेशवंवीक्ष्यपार्थंचरथिनां
वरम् ६० गृहेस्थितःसकामाद्यःसतेनपरिपाल्यते आवांगच्छावहेराष्ट्रात्भ्रातरौनृपतेर्बहिः ६१
तस्मिन्राष्ट्रेनवस्तव्यंयस्मिन्राजानसत्यवाक् तत्संसर्गाद्गुणानृणांवसतांसंभवंतिहि ६२ तत्समी
पेनिवसतांपातकंहिभवेन्नृणाम् आसनाच्छयनाद्यानात्संपर्कात्सहभोजनात् ६३ एतावदुक्त्वा
वचनंलिखितःशंखसंयुतः परित्यज्यगतःसोथदूतास्तेनृपतिंगताः ६४ ब्रुवंतिसर्वंतत्प्रोक्तंराजा
नंप्रतिमारिष गतौनृपमहाबुद्धीमुनिग्रामाद्रुषान्वितः ६५ तमिहानयराजेंद्रमुनिंधर्मोपदेशकं
म् जैमिनिरुवाच हंसकेतुःसमादिश्यसचिवंपुत्रपातने ६६ सुतप्तेतिलतैलेचक्षि
पद्दुष्टंममाज्ञया सुधन्वानंमयिगतेलंघीरसचिवैर्वृतः ६७ पार्थंपश्यरणेवीरंयास्यहंतंपुरोहितं
नमस्कर्तुंमहाबुद्धिंपुनरेष्यामियोधितुम् ६८ एवमुक्त्वावचोराजानमस्कृत्यपुरोहितौ आन
यामासतौतत्रकटाहोयत्रतादृशः ६९ सुमतिःसचिवश्चक्रेसर्वंनृपतिभाषितम् सुधन्वा
नंमहावीरंमत्युवाचविशांपते ७० सुमतिरुवाच सुधन्वन्किंकरोम्यद्यत्वांस
मीक्ष्यमहाबलम् हृदयेजायतेतीवकरुणामेमहाभुज ७१ शासनंचापिनृपतेर्लंघितुंनैवशक्यते
शासनंचापिराज्ञोमेदारुणंत्वयिविद्यते ७२ सुधन्वोवाच कर्तव्यंशासनंराज्ञस्त्वयापरवशेन
हि पितृवाक्येनरामेणस्वजनन्याःशिरोहृतं ७३ जामदग्न्येनपूर्वंतुतत्रकापरिदेवना प्रतीतोहंमहा



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

बुद्धेकृतापुण्यक्रियाशुभा ७४ नभयंमरणान्मह्यंतप्ततैलेद्यसांक्षिप जैमिनिरुवाच सु
मतिस्तनयाभूतंस्नानंदिव्यांबरावृतम् ७५ तुलसीदलजांमालांधारयंतंमहोरसि स्मरंतंवसुदे
वस्यतनयंचापिकेशवम् ७६ उत्थाप्यतैलेचिक्षेपसुतंसभूतशासनात् सुधन्वाप्राहगोविंदंप्रथ
मयाहृशंवचः ७७ तत्तेहंकथयिष्यामिशृणुतर्कसमन्वितम् ज्वालाकुलंवीक्ष्यतैलमावर्तशतसंकु
लम् ७८ परोदयंसमालोक्यदुर्जनस्येवमानसम् जायतेताहृशंजातंकटाहंजनमेजय ७९
सुधन्वोवाच आहिचाहीतिगोविंदमयायद्भाषितंवचः श्रुत्वात्वंनागतोयस्मात्तज्ज्ञातंका
रणंहरे ८० मामवज्ञायसंप्राप्तसुधन्वाकामचारकः पश्चात्स्मरतिपापिष्ठःसंकटेघजगद्गुरु
म् ८१ स्मरंतिकृच्छ्रपतितास्त्वामेवभयविह्वलाः जनानसुखसंयुक्ताःसत्यमेतद्वदाम्यहम् ८२
धिगमेसौख्यकृच्छ्ररूपंमन्येहरिविवर्जितम् प्रह्लादोगजसुख्यश्चध्रुवःपृषतनंदिनी ८३ अन्येगो
पाद्योलोकेस्मरत्यापत्सुकेशवम् पूर्वंस्मृतोसितैरेवत्वंतास्तेकृच्छ्रतस्त्वया ८४ अंतकालेचिं
तनंतेजायतेमुक्तिदंनृणाम् हृदयेचिंत्यमानेननाम्नातवजनार्दन ८५ ममभुक्तिर्नसंदेहःपरलो
केविगर्हितः सुधन्वामरणंदुष्टंप्राप्तोवीरःकथंहजम् ८६ अद्यकृष्णार्जुनौवीरौतोषितौनामु
नाबलात् गांडीवमुक्तैर्नाराचैर्गात्रंनशकलीकृतम् ८७ सुधन्वनःसमर्थस्यचोरस्येवभवेद्गतिः
मनसानधृतोकृष्णोसैन्यंननिहतंबहु ८८ ईदृशैर्बहुभिर्वाक्यैःप्रहसिष्यंतिमांजनाः वन्हिदाहा
दद्यहरेमांत्वंरक्षितुमर्हसि ८९ द्रौपदीवस्त्ररूपेणलज्जाब्धौपतिताधृता त्वयाकृष्णेनसदसिस
मक्षंद्रोणभीष्मयोः ९० जैमिनिरुवाच एवंब्रुवतिवीरेस्मिन्स्मरणान्माधवस्यतु तैलंसु
शीतलंजातंसज्जनस्येवमानसम् ९१ सर्वेजनास्तंप्रसमीक्ष्यतैलेयथाजलेपंकजवत्प्रफुल्लम् सु
धन्वनःकुंडलिनःसुनेत्रंविसिस्मयुश्चाननमस्यदुःखात् ९२ अश्रूणिमुंचंतिपतंतिभूमौवक्षःकरा-
भ्यामभिताडयंति क्रोशंतिहाहेतिकिरीटकंचक्षिपंतिबाहून्परिधूनयंति ९३ वदंतिराजाकिमसौ

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri, Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





नचास्मान् सुधन्वनोर्थेक्षिपते [illegible] गच्छेमदेवंयदुनंदनंतं धनंजयंकृष्णपदप्रपन्नम् १४ जैमिनिरुवाच हंसध्वजः शंखसुतोददर्शपुत्रंकटाहेप्रतरंतमेनम् पुण्यानिनामानि हरेर्जपंतंगोविंददामोदरमाधवेति १५ शंखोब्रवीत्तंनृपतिंकिमेतत्तैलंनतप्तंज्वलताग्निनापि किमौषधंमंत्रवरं सुतस्तेजानातिराजन्नथकैतवंवा १६ कुतोज्वलत्तैलमिदंकुतोसुरवंप्रफुल्लपद्माभमिवास्यराजन् क्षिपंतुदूतानवनारिकेलंभवेत्ततस्तैलमिदंपरीक्षितम् १७ निशम्यतद्वाक्यमतीवतीव्रंदूतास्तदातैलसमानभूताः मुनेर्भयात्तेफलमाशुतैलेविचिक्षिपुः शंखदृशः पुरस्तात् १८ द्विधाभिन्नंह्यभवत्तत्कटाहात्शंखस्यचैकंशकलंललाटे लग्नंद्वितीयंलिखितस्यचापितथोच्छलंत्यस्तिलतैलधाराः १९

इत्याश्वमेधिकेपर्वणिजैमिनीयेसुधन्वनःसत्वकथनंनामसप्तदशोऽध्यायः १७

जनमेजयउवाच कथंकटाहात्समहाबलोपिजगामपार्थंसचमुक्तगात्रः तत्कौतुकंशंसतु जैमिनेमेनिरीक्ष्यशंखः किमकारितत्र १ जैमिनिरुवाच विलोक्यतंतैलमध्येसुधन्वानंमहामुनिः भृत्यंपप्रच्छवीरेणपात्यमानेनकिंस्मृतम् २ औषधस्यचमूलंवाबद्धंगात्रेतथासुना दूताऊचुः नान्यत्स्मृतंकिंचिदेवविनाकृष्णंमहामतिम् यस्यस्मरणमात्रेणमुच्यंतेयोनिसंकटात् ३ प्राणिनोभूतलेब्रह्मन् सस्मृतोमाधवोसुना पश्योष्ठोस्फुरमाणौलंशंखमाधवभाषिणौ ४ सुधन्वनोतिसत्वस्यप्रियादृष्टोसमागमे शंखउवाच स्मृतोयद्यसुनाविष्णुः पात्यमानेनसाधुना ५ धिगहंकठिनोबालंपश्यामिनिकटस्थितः प्रायश्चित्तंस्वदेहस्यकरिष्येमरणांतिकम् ६ एतावदुक्त्वावचनंतैलमध्येपपातसः समालिंग्यसुधन्वानमिदंवचनमब्रवीत् ७ साधुस्त्वियवीरस्त्वमसाधुरहमद्विजः येनतैलेपातितोसिमयापेशलचेतसा ८ भवंतितेतापयुतायेनविंदंतिमाधवम् गतश्रीकाश्चमूढाश्चनित्यंदुःखसमन्विताः ९ येस्मरंतिचगोविंदंसर्वकामफलप्रदम् तापत्रयविनिर्मुक्ताजायंतेदुःखवर्जिताः १० कथंत्वंवह्निनादग्धुंशक्यः



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

परमवैष्णवः मुनयोयंनपश्यंतिसुरासुरगुरुंहरिम् ११ चेतसापित्वयावाचिप्राणांतेसस्मृतोधु
ना प्रह्लादोरक्षितोयेनदग्धस्तस्माद्धुताशनात् १२ त्वच्छरीरस्यसंपर्कात्पावनंमेवपुस्त्विदम्
जातंपुरुषशार्दूलनोपायोऽन्योऽस्तिपावनः १३ राजानंराजपुत्रांश्चसैन्यंपावयसुव्रत उत्तिष्ठवत्स
तैलात्त्वंमांसमुद्धरभूपज १४ कृष्णोयंपांडवस्यार्थेसारथ्यंप्रकरोतिच अर्जुनेनाद्यसंग्रामंकु
रुवीरयथोचितम् १५ यशःस्थिरंस्वकंकुलापश्चात्प्राप्नुहिमंगलम् जैमिनिरुवाच
गृहीत्वातंतैलमध्याद्द्रोणप्राप्तोमहामुनिः १६ राजानंप्रत्युवाचेदंपुत्रंपश्यसनातनम् शंखउ
वाच अनेनविधृतंमूलंसद्विद्यायासुखेस्वके १७ मंत्रराजंनृसिंहाख्यंजपतारक्षितंव
पुः यशोमयंपावितोहंत्वातुपावयितुंस्थितः १८ ततोहंसध्वजःपुत्रंसमालिंग्याब्रवीद्वचः
हंसध्वजउवाच मयापित्राभवान्त्यक्तस्तैलेपावकदीपिते १९ नदग्धोसिहुता-
शेनप्रभावात्केशवस्यतु माहात्म्यंवासुदेवस्यत्वांनिपातयिताधुना २० सम्यक्वत्सपरि
ज्ञातंमयेदानींनसंशयः उत्तिष्ठदेहिमेवत्सपरिरंभणमद्यवै २१ उत्तिष्ठवत्समद्दत्तेरथमा
रुह्यसंगरे कृष्णंदर्शयपार्थस्यसारथिंचममातिथिम् २२ सुधन्वनाथदृतोतोहृष्टेननृप
भूसुरौ रथंरत्नविचित्रंतंहेमबद्धसुकूबरम् २३ दीर्घध्वजंचारुचक्रंगवाक्षैर्बहुभिर्वृतम् हे
मवर्णैर्हयैर्युक्तंबद्धचामरमाशुगम् २४ सुवर्णमालापरिभूषितंबलीमाल्यस्रजोभिर्बहुलाभि
रर्चितम् नियंत्रितंसूत्रवरेणकिंकिणीनादेननृत्यंतमिवारुरोहसः २५ जैमिनिरु
वाच एतस्मिन्नेवकालेतुसैन्यंभूपस्यसंस्थितम् पार्थस्यप्रमुखंघोरंकालचक्रमिवा
परम् २६ वीराननेभ्यस्तांबूलंपतितंभूतलेबहु तेनभूःशुशुभेतत्रसाचद्रोणारुणातथा २७ यथा
निशागमेराजन्द्यौरियंभास्करत्विषा वीरगात्राणिमुंचंतिचंदनंसमृगोद्भवम् २८ परस्परस्यसं
घर्षोत्कृष्टेभ्योमौक्तिकस्रजः त्रुटिताश्चधरापृष्ठेदृश्यंतेजनमेजय २९ कवचानांकिरीटानांविचि

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





त्राणांरणेप्रभाः द्योतयंतिजगत्तत्र नेत्राणिचनिमीलिरे ३० चंदनंपतितंवायुरनयद्दिविसर्वतः
पुष्पाणिभूतलान्नाकेगच्छंत्यूर्ध्वंनृणांवर्षतः ३१ विजेतुंस्फुरद्वृक्षाणांमाल्यानिस्फुरभीण्यपि नराणां
मुखवासेनस्फुगंधेनपराजितः ३२ भ्रममाणोऽभवद्राजंस्तथाचमलयानिलः गजपुष्करतोयेनस
मापिविषमासही ३३ हताहयखुरक्षुण्णैरजोभिःपूरितापुनः रथनादेनघोरेणमेघसागरग
र्जितम् ३४ जातंमूकमहंमन्येवाचालमपिविश्रुतम् पदातिपदविन्यासाद्धरतीवप्रकंपिता ३५
हंसध्वजोब्रवीद्वीरान्गृह्णंतुतुरगंशुभम् ततस्यवचनाच्छीघ्रंगृहीत्वाहयमागताः ३६ पूजितं
चर्चितंधूपवासेनबहुधूपितम् पद्मव्यूहेनृपस्तस्थिस्थाप्यपुत्रैःसहोदरैः ३७ संयुतोभरतश्रेष्ठ
अर्जुनंयोद्धुमुद्यतः सुधन्वासुरथश्चैवसुमतिःसचिवस्तथा ३८ वीरकेतुस्तीव्ररथःशतधन्वा
महारथः सुमतेस्तनुजाश्चापितथान्येबहवोनृपाः ३९ प्रययुःपुरतःपार्थंयोद्धुकामायथासुखं
ततोदुंदुभिनिःश्रेण्यःपटहामर्दलास्तथा ४० तंत्रकीवेणुशृंगाणिमृदंगाश्चववादिरे डिंडिमाःशृ
गभेदाश्चपणवाश्चतथाऽनकाः ४१ ढक्कादवसभेर्यश्चगोमुखाकाहलास्तथा झर्झराजलज्रा
स्तालावंशामुरलिकावराः ४२ ताडितावाद्यकुशलैस्तस्मिन्वीरसमागमे तेननादेनगिरयः
सागराश्चापिचुक्षुभुः ४३ कातराणांतुचेतांसिद्विधाभूतानिभारत जैमिनिरुवाच
पार्थस्तदाब्रवीत्तत्रकृष्णपुत्रमिदंवचः ४४ काश्यसतुरगोदेवनीतोहंसध्वजेनहि तंतुमोचयि
तुंवीराःकेगमिष्यंतितद्वद ४५ भवान्सपुत्रोबलवान्यौवनाश्वोमहामतिः अनुशाल्वश्चवीरो
यद्भूतवर्माचसात्यकिः ४६ वृषकेतुर्महातेजाअनिरुद्धश्चवीर्यवान् नीलध्वजोग्निजामाताय
स्यराष्ट्रेनिरीक्षितः ४७ एतेचान्येचसंत्यत्रतथाहमपिसंस्थितः परराष्ट्रेवयंप्राप्ताःसबल
स्यविशेषतः ४८ त्वंतुनाथोऽसिसर्वेषामहमग्रेव्रजेऽधुना प्रद्युम्नउवाच मैवंवदम
हाभागविस्मृतंकृष्णभाषितम् ४९ सर्वस्वंमत्करेदत्तंपांडवाख्यमहात्मना पित्राकृष्णेनतदहंसव



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

लः किंविनाशाये ५० समक्षंधर्मराजस्यभीमस्यचमहात्मनः अद्यमेभुजयोःपश्य बलंपार्थरणां
गणे ५१ हंसध्वजंसुधन्वानंसुरथंसुमतिंतथा तोषयेनिशितैर्बाणैर्बलंचविनिपातये ५२ एनंनृ
पवरंविद्धित्वदाररसिकंरणे जैमिनिरुवाच प्रद्युम्नस्यवचःश्रुत्वावृषकेतुरुदार-
धीः ५३ नमस्कृत्याब्रवीद्वाग्मीनशुक्तंयुवयोर्वचः कियत्सैन्यंयुवांचात्रप्रलयोत्पत्तिकारकौ ५४
मुखवातेनयोगच्छेत्तूलतुल्यबलःपुरः तदर्थंप्रेषयेत्कोत्रप्रज्वलद्वडवानलम् ५५ नेत्रयक्ष्मप्रहा
रेणहन्यतेमशकोयदि तंहंतुंकश्रमदात्मानाक्ष्र्यौदिशतिनागहम् ५६ स्वल्पशीकरवर्षेणयद्रजः
परिशाम्यति तन्नाशायकथंवर्षन्वरुणोयातिकोपतः ५७ तथाविधमिदंभातियुष्माकमितिमे
मतिः भवन्द्यामिहमादिष्टोनानयेकिंतुरंगमम् ५८ यमदूतगणैर्बद्धंहरतेहरिकिंकरः यथासं
सारिणंजीवमनंतपदसेवकम् ५९ एषगच्छामिसंग्रामेपार्थपश्यतवाहितान् जैमिनि
रुवाच निर्ययौकर्णपुत्रोग्रेपांडवेननिवारितः ६० शंखंदध्मौमहातेजाहंसध्वजबलंप्रति
रथेनातिविचित्रेणसुपताकेनगर्जता सारथिंप्राहधर्मात्मातुरंगान्तित्तिरप्रभान् ६१ ममनोदय
सूतेतिपद्मव्यूहेसुदारुणे सारथिस्तत्क्षणादेवकशासुधयवेगवान् ६२ प्रेरयामासतुरगान्जव
नान्रणकोविदः वृषकेतुंविलोक्याथसुधन्वावाक्यमब्रवीत् ६३ सुधन्वोवाच
पद्मव्यूहमहत्त्वैवकः समायातिलीलया वृषोस्यदृश्यतेरम्योध्वजस्थोनधनंजयः ६४ एकएवापरः
कश्चिद्वीरःसत्वसमन्वितः धनंजयकर्णैःकीर्णैर्दृश्यंतेकिन्नभूभृतः ६५ तस्मादेकोबहून्प्राप्तोद्य
नाहत्वाधुनाहितः अहमेनंव्रजाम्यद्यवीरंरणविशारदम् ६६ सूतमांनयभद्रंतेवीरस्यरथसं
मुखम् तेनसूतेननीतोऽसौसुधन्वारथिनांवरः ६७ उभौतौसंस्थितौयुद्धेनत्रतीव्रपराक्रमौ
सुधन्वावृषकेतुंहिपप्रच्छमुदितोहसन् ६८ सुधन्वोवाच कस्त्वंकस्यात्मजश्चा
सिकिंनामतवसुव्रत वृषकेतुरुवाच यंप्रेत्तुसुद्यतोऽसित्वंसचास्माकंपितामहः

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



६९ पुत्राणामवरस्तस्य यः कर्णश्च सुतोपरः दातॄणामग्रणीर्वीरो नित्यं धीरः समो पिता ७० कश्यप
स्य कुले जातं विद्धि मां वृषकेतुकम् सुधन्वोवाच हंसध्वजस्य पुत्रो हं सुधन्वा नाम मे-
ऽरिभम् ७१ मधुच्छदा ऋषिः पूर्वमस्माकं वंशकारकः तिष्ठ युद्धे मम पुरः पौरुषं त्वं प्रदर्शय ७२ ते
जस्वी पूर्वजः सूर्यो यथा ध्वांतमपोहति तथा भवान् शत्रुबलं युद्धे वारयिता भव ७३ स्वकुलं वर्ण
यंत्येव मंदाः पौरुषवर्जिताः वृषकेतुरुवाच अधुना दर्शयिष्यामि स्वबलं सायकैर्न हि
एते मदीया नाराचास्तीक्ष्णधाराः सुतेजसः ७४ सहसा तव सैन्ये च गमिष्यंति महाहवे वचसा
यन्मया प्रोक्तं नानृतं तत्संजायते ७५ जैमिनिरुवाच शराणां महती वृष्टिस्तेन मुक्ता
बलं प्रति सुधन्वानं छादयित्वा सिंहनादमथाकरोत् ७६ भित्वा शरीराणि शरा गजाश्वरथपत्ति
नाम् चक्रुर्जीवितहीनानि वृषकेतोर्महात्मनः ७७ सर्वतस्तेन विद्धोसौ सुधन्वा रथयूथपः बलं न दृ
श्यते सर्वं बाणैश्छन्नं नराधिप ७८ सुधन्वनो हयान्विध्वा सारथिं च महाध्वजम् चिच्छेद तरसा
युद्धे महसन् पंचभिः शरैः ७९ पुनरेवाहृणोत्सैन्यं सर्वेषामेव पश्यताम् गार्ध्रपत्रैः सुनिशितैः शतधा
पातितं भुवि ८० छत्राणि चामराण्येव ध्वजांश्च विविधानपि वादित्राणि च संक्रुद्धो युधि चिच्छेद
कर्णजः ८१ हस्तिहस्तोपमान्बाहून् सायुधान्भूषणैर्वृतान् शिरांसि च महाबाहुः संदष्टोष्ठपुटा
नि च ८२ तत्सभिन्नं बलं वीक्ष्य रथमन्यं समाश्रितः सुधन्वा पौरुषं तस्य बहुधा हृद्यमन्यत ८३ जघा
न तुरगानस्य सारथिं च महाध्वजम् तूलराशिनिभं कृत्वा पंचभिस्तमताडयत् ८४ वृषकेतोर्धनु
श्छिन्नं स तूणं पंचभिः शरैः भ्रममाणं च तत्क्वापि गतं यत्र महद्बलम् ८५ कर्णपुत्रस्य संग्रामात्तदद्भु
तमिवाभवत् मूर्च्छां विहाय धर्मात्मा यावत्पश्यति मानिनम् ८६ तावद्ददर्श तं घोरं सैन्यमध्यस्थितं
पुरः आत्मानं सैन्यमध्यस्थं बहुभिः परिवारितम् ८७ विलोक्य रथहीनं च क्रोधाज्जग्राह तद्धनुः
दृढज्यं प्रमुमोचाथ बाणान् हेमविभूषितान् ८८ सर्वांगं सायकैश्छिन्नमच्छिन्नमिव धारयन् हं



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

सध्वजस्यततःसैन्यंचचक्रेजीवितवर्जितम् ८९ ततःपरस्यसैन्येनवेष्टितःकर्णनंदनः शक्तिभिस्तोमरै-
र्भल्लैर्भिंडिपालैश्चसंगरे ९० मुद्गरैरसिभिर्घोरैःसमंताच्चविहन्यते नाराचैःक्षुरपत्रैश्चभुशुंडीभि
स्तथासुरैः ९१ गदाभिःपरिघैश्चैवपट्टिशैश्चत्रिशूलकैः शस्त्रास्त्रैरर्द्यमानंस्वंवपुःकर्णात्मजोबली
९२ निरीक्ष्यवासुदेवस्यनामानिसहस्राजपन् ततोऽन्यंचरथंसूतोयोजयित्वामहाध्वजम् ९३ क
र्णात्मजस्यसान्निध्येजगामरणमंडले तंसमारुह्यवेगेनवृषकेतुःपुनःप्रभुः ९४ विव्याधसायकै
स्तीक्ष्णैःसुधन्वानंहसन्निव सैन्यंचपीडयामाससमंताद्बाणवृष्टिभिः ९५ सुधन्वाकर्णपुत्रंतंहृदि
विव्याधपंचभिः पुनःसमूर्च्छामगमद्वृषकेतुर्महाबलः ९६ मूर्छितंसारथिःशीघ्रंवृषकेतुंमहाब
लम् रणमध्यादपोवाहतावत्कार्ष्णिःसमागतः ९७ प्रद्युम्नस्तिष्ठतिष्ठेतिसुधन्वानंसमाक्षिपत्
पंचभिस्तंशरैर्घोरैःपीडयामाससंगरे ९८ सूतंसुधन्वनोरोषादनयद्यमसादनम् हयानांशक
लान्येवविंशतिःक्रोधमूर्च्छितः ९९ चकाररथयुक्तानांचतुर्णांहिशितैःशरैः युगेकृतेऽष्टधाबा
णेस्त्रिभिरेकेनकार्मुकम् १०० प्रद्युम्नेनत्रिशकलंकृतंचित्रंसुधन्वनः सुधन्वापिरणेज्ञात्वाप्रद्यु
म्नस्यास्त्रकौशलम् १ चकारलीलयायुद्धेपौरुषंस्वंप्रदर्शयन् संधानमद्भुतंरोषाच्छराभ्यामष्ट
धाहयान् २ युगंत्रिवेणुकंरम्यंकृतंषोढासुधन्वना प्रद्युम्नस्यधनुश्छिन्नंबाणेनैकेनपंचधा ३
तेनापिसारथेश्छिन्नंनदद्भुतमिवाभवत् त्रिभिःकृष्णसुतंविध्यसिंहनादंचकारह ४ उभौतौ
बलिनौवीरौमहारणविशारदौ गगनेभूतलेयुद्धंचक्रतुःखेचराइव ५ मूर्छितौपतितौबाणैःपी
डितौरुधिरोक्षितौ सुधन्वाप्युद्धृतःक्रुद्धोरथमन्यंसमाश्रितः ६ ताडयामासपार्थस्यवीरान्बाणैः
सहस्रशः कृतवर्माणमासाद्यजघाननवभिःशरैः ७ कृतवर्मातेनमुक्तांस्त्रिधाचिच्छेदसाय
कान् पंचभिःपीडयामाससुधन्वानंमहोरसि ८ सुधन्वाचततोराजन्नवभिःसायकैःक्षणा
त् हार्दिक्यंविरथंचक्रेहयान्हत्वाचसारथिम् ९ सशरैरर्दितोवीरोरणंत्यक्त्वापलायितः

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





अनुशाल्वस्ततोवीरःसुधन्वानंमहारणे १० समाहूयाब्रवीद्धीरोगृहीत्वासशरंधनुः अनुशाल्वउवाच सुधन्वन्बहवोवीरास्त्वयायुद्धेप्रतोषिताः ११ सबलेनसमक्षंमेपरमं कौतुकंहितत् सहस्रमच्छरंचैकंसर्वेषामेवपश्यताम् १२ ततोमुमोचनाराचंवडवानलसन्निभम् अनुशाल्वकरान्मुक्तंवीक्ष्यबाणंसुदारुणम् १३ छेत्तुंव्यवस्थितोबाणैस्तंशरंनशशाकसः प्रविष्टोहृदयेबाणस्तदातस्यसुधन्वनः १४ अनुशाल्वस्ततःसेनांदारयामाससायकैः सुधन्वानंमहाबाहुंनवभिःसायकैर्दृढैः १५ विरथंत्वरितंकृत्वापातयित्वाधरातले जगर्जचतदावीरस्ततोदैत्याधिपोबली १६ अथमूर्च्छांविहायाशुसुधन्वारथिनांवरः विव्याधैकेनबाणेनरणेशाल्वानुजंबली १७ तेनबाणेनभिन्नोसौनिपपातधरातले सेनांपार्थस्यदिविधांनाराचैःशतधाभिनत् १८ गजानांकंसबहुधाभित्वाचक्रेवसुंधराम् रुधिरौघवतींराजन्विषमांमांसकर्दमाम् १९ गजाननेषुभिन्नेषु हयशीर्षाणिसंगरे संगतानिस्मदृश्यंतेशतशोऽथसहस्रशः २० द्विधाभिन्नाहयाबाणैःसादिभिःसहितारणे पुरोभागेनगच्छंतिपातितापिसुधन्वना २१ नराश्वगजदेहासंररवराणांरुधिरमिलत् शरैश्छिन्नैर्विभिन्नानांबहुधासरितंप्रति २२ तैश्छिन्नबाहवोवीरारुधिरौघेणवाहिताः बाहुदांप्राप्यसकरागगनेचाभवन्क्षणात् इतस्ततोबलंभग्नंविमुखंपांडवस्यतत् १२३

इत्याश्वमेधिकेपर्वणिजैमिनीयेसुधन्वनोयुद्धवर्णनंनामाष्टादशोऽध्यायः १८

७ जैमिनिरुवाच जगर्जचसुधन्वातंससत्यासात्यकिप्रभुम् नाराचानांनिर्बिभेदतस्मिन्युद्धेजनाधिप १ सात्यकिःपंचसप्तत्याभल्लानांस्यंदनंहयान् सूतंध्वजंतथाछत्रंचिच्छेदतस्यमेवच २ नीडंचक्रेपार्श्वधारंचिच्छेदाशुसुधन्वनः सुधन्वासात्यकिंक्रुद्धश्चकारविरथंहसन् ३ उभौस्यंदनमारुह्यपुनरेवव्यवस्थितौ अवरंबाणसाहस्रैश्छादयामासतूरणे ४ उभौशरविशीर्णांगौरुधिरौघप्लव-



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

र्पिणो किंशुकाविवराजेतेवसंतेपुष्पितौनृप ५ शक्तिंमुमोचकुपितःसात्यकिंपरिपीडयन् युयुधानः
शक्तिघातात्कश्मलंप्रत्यपद्यत ६ शैनेयंमूर्च्छितंवीक्ष्यहाहाकारोमहानभूत् भयार्तंतंबलंसर्वम-
पांवाहतयाकुलम् ७ ततःपार्थोमहाबाहुःसुधन्वानंसमागमत् तिष्ठतिष्ठेतिबहुधाकुतोयासीत्यवो
चत ८ अर्जुनउवाच जितामदीयाबहवस्त्वयायुद्धेमहाबल बलंतवाधिकंवीरशक्र
स्येवमहात्मनः ९ मयायुद्धानिसमरेकृतानिसुबहून्यपि द्रोणभीष्मकृपैःसार्द्धंकर्णेनचमहात्मना
१० कालखंजेश्चबहुभिःशंकरेणासुरैःसह तथानविस्मयोजातोयथात्वांवीक्ष्यजायते ११ सु
धन्वोवाच युद्धानियानिसंग्रामेत्वयापार्थजितानिहि तत्रतेसारथिःकृष्णोहितकर्तायतःस्थि
तः १२ कृष्णाद्धीनोसिसंग्रामेतेनतेविस्मयोभवत् त्वयात्यक्तोयदिहरिःकथंत्वंहरिणासुना १३ त्य
क्तोसिमहाबुद्धेयुद्धएवममैवतु युद्धंमयासमंपार्थकर्तुंशक्तोसिकिंनवा १४ तुरंगंतवयूपेद्यअन्विब
द्धंयथोचितम् हंसध्वजोनृपश्रेष्ठोवाजिमेधंकरिष्यति १५ अद्यपश्यंतुतेदेवाःसंग्रामंकिलमामकम्
संगरेत्वांविजेष्यामिसकृष्णमपिचार्जुन १६ जैमिनिरुवाच ततःपार्थोबाणशतंसंदधे
कोपपूरितः सुधन्वातान्शरान्दिव्यांश्चिच्छेदप्रहसन्निव १७ दशभिस्ताडयामासशरैःकुंतीसुतं
हसन् शतेनचसहस्रेणायुतेनप्रयुतेनच १८ बाणानांछादयामासरणेक्रुद्धंधनंजयम् अर्जुनो
पिशरांस्तस्यचिच्छेदतिलशस्तदा १९ आग्नेयास्त्रंमुमोचाथसृक्किणीपरिलेलिहन् सुधन्वनोति
कुपितोबाणवृष्टिंचमारिष २० खेनगच्छंतिखचराःपार्थसायकभेदिताः बाणांधकारेपतितंजगत्त्र
यमभूत्तदा २१ सैन्यंसुधन्वनोदग्धंपावकास्त्रेणभूतले ज्वालाकुलंवीक्ष्यवह्निंदाहयंतंनिजंबलम्
२२ सुधन्वावारुणास्त्रंचजग्राहाग्निनिवारणम् संजातामहतीवृष्टिस्तेनमुक्तास्वकार्मुकात् २३ जलदै
र्भूतलंव्याप्तंगगनेविद्युतःस्थिताः निमग्नंपांडवबलंशिलावृष्टिभिराहतम् २४ बभ्रामसंयुगेचाथ
शीतेनाथविमोहितम् चातकानांमयूराणामानंदःसुमहानभूत् २५ वादित्राणिचनष्टानिचर्मनद्धा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



निम्नतले स्कवर्णचंपकाभेषुलग्नानिसुमृदून्यपि २६ वीरांगेषुचदृश्यंतेवस्त्राणिविविधानिच चाम
राणिचचर्माणिगजकुंभस्थलानिच २७ शोभाहीनानिजातानिजलपातेनसंगरे बाणाःपक्षविहीनास्ते
नभिंदंतिरणेपरान् २८ अतिदृष्ट्यानपश्यंतिस्वपरंपुरुषाहिते ततोऽर्जुनोमहावीरोवायव्यास्त्रंसमाद
दे २९ वायुनाजलदाभिन्नाध्वजाश्चपरिपातिताः भ्रामितावारुणाघोटानरादासेरकाःखराः ३० एत
स्मिन्नंतरेवीरःसुधन्वापार्थकार्मुकम् अर्द्धचंद्रेणचिच्छेदज्यांहिसूतंत्रिभिःशरैः ३१ शरहीनंपांड
वंचचक्रेवीरोतिकोपितः उवाचपार्थंभगवान्सारथिस्तेनविद्यते ३२ शरैःक्षतोसिपार्थत्वंपौरुषंक्व
गतंचते सर्वगंसारथिंत्यक्त्वाप्राकृतःसारथिःकृतः ३३ स्मरस्वसूतंकृष्णाख्यमसमाद्यपतितोह्य
सि जैमिनिरुवाच अर्जुनोऽपितुजग्राहतुरगान्स्वान्महाहवे ३४ वामहस्तेनधनु
षासमंचयुयुधेपुनः यावत्स्मरतिगोविंदंतावद्दृष्टोरथेहरिः ३५ मुमोचाश्वानर्जुनेतिव्याजहारव
चोहरिः अथार्जुनोनमस्कृत्यवासुदेवंसमागतम् ३६ अश्वानांप्रग्रहांस्त्यक्त्वासावधानेनचेतसा
मुमोचसायकान्घोरान्समंतात्वसुधन्वने ३७ वीक्ष्यकृष्णंरथेचास्यसुधन्वावाक्यमब्रवीत्
सुधन्वोवाच दृष्टस्त्वमसिगोविंदपांडवार्थेसमागतः ३८ सर्वगत्वंमयाज्ञातंत्वदीयंकिल
केशव पार्थसूतंहरिंप्राप्यप्रतिज्ञांकुरुमज्जये ३९ अहंतुतोषयिष्यामिपौरुषेणरणेजगत्
अर्जुनउवाच त्रिभिःशरैःशिरोरम्यंपातयिष्येचतावकम् ४० नपातयेयं
दिपुरःपतंतुममपूर्वजाः निरयेपुण्यहीनास्तेसत्यंसत्यंनमेनृतम् ४१ आत्मानंपालयविभो-
स्वांप्रतिज्ञांवदाऽधुना सुधन्वोवाच त्वच्छरान्छेदयिपुरतःस्त्रीन्तत्रहरिसन्नि-
धौ ४२ त्रिधाहंनकरोम्यद्यगतिंघोरामवाप्नुयाम् एतावदुक्त्वावचनंशतेनमधुसूदनम् ४३ बाणानां
हृदयेहर्षाद्बिभेदसमरेबली रथश्चोत्पादितोबाणैःसहकृष्णेनमारिष ४४ साश्वःसपार्थस्तरसाब
भ्रामघटचक्रवत् धनंजयंचदशभिःसमंताद्व्यकिरच्छरैः ४५ रथःपार्थस्यनीतोसौनत्वमात्रंमही



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

तले तत्क्षणात्पश्चिमंभागं हंसध्वजस्ततेनाहि ४६ श्रीकृष्णउवाच पश्यपांडववीरस्य
पौरुषंत्वंसुधन्वनः वृथावधेप्रतिज्ञातंत्रिभिर्बाणैश्चतेऽर्जुन ४७ असंमंत्र्यमयासार्द्धंकृतंयत्साहसं
संपुनः जयद्रथवधेयानिकृच्छ्राणितवचाभवन् ४८ विस्मृतानिकथंपार्थनजानासिहिताहित
म् रथःपद्भ्यांमयारोषात्विधृतोपिहिनीयते ४९ सुधन्वनःशरेणाद्यनल्वमात्रंमहीतले एकपत्नी
व्रतयुतःसुधन्वातीवदृश्यते ५० नत्वयानमयातत्तुव्रतंकर्तुंप्रशक्यते महत्कष्टंव्यवसितंवृद्धेऽस्मि
न्नतिभातिमे ५१ अर्जुनउवाच गोविंदपातयाम्येनंत्रिभिर्बाणैर्नसंशयः अभ
विष्यन्महत्कृच्छ्रंनभवेद्यत्त्वदागमः ५२ जैमिनिरुवाच शिलीमुखैस्ततःपार्थोव्यह
रणोत्सदिशोदश ५३ सुधन्वारोषताम्राक्षोविधुन्वन्सशरंधनुः उवाचकेशवंभूयोयथागोवर्द्धनो
गिरिः ५४ गवार्थंविधृतःकृष्णतथापालयपांडवम् ततःपार्थोमहाबाहुःसंदधेकार्मुकेशरम् का
लानलनिभंरोषान्मुमोचास्मैप्रतापवान् ५५ तंशरंवीक्ष्यगोविंदःस्वपुण्यंसमयोजयत् गोवर्द्ध
नश्चविधृतोरक्षितावधेनवःपुरा ५६ तेनपुण्येनबाणोस्यसन्नद्धस्तत्क्षणात्कृतः दिविदेवाश्चसं
प्राप्तास्तयोर्युद्धंदिदृक्षवः ५७ कौतुकार्थंचसंप्राप्तास्तदाप्सरसांगणाः विमानमधिरूढास्तेदिव्या
लंकारभूषिताः ५८ सुधन्वासंगरेदेवंकृष्णंचहितकारकम् ज्ञात्वाप्रोवाचबलवानेतंछेत्स्यामि-
सायकम् ५९ बहुपुण्येनसंयुक्तंपातयेनशरंयदि सुकृतंमेवृथायातुभुक्तंराक्षसदस्युभिः ६० वि
ज्ञापितोसिगोविंदपश्यपुण्यंमयाकृतम् अर्द्धचंद्रंमुमोचाथपार्थसायकमागतम् ६१ तेनाच्छेदतरसा
सच्छिन्नःसायकोपतत् ६२ विस्मितादेवताःसर्वास्त्रैलोक्यमपिविस्मितम् शीघ्रसंधानसंयुक्तंसुध
न्वानंनिरीक्ष्यतम् द्वितीयंसायकंपार्थोयावद्योजयतेपुनः ६३ तावत्कृष्णोनसस्मारःश्रेयसाबहुलेनच
सन्नद्धःक्षितिदानेनपांडवंप्रतिरक्षता ६४ सुधन्वोवाच अर्जुनार्थंस्वकंपुण्यंयदिगोविंदयो
जितम् सायकेस्मिन्समक्षंतेपातयेर्जुनसायकम् ६५ प्रतिज्ञांशृणुवीराद्यधनंजयमहाबल द्विधाशरं

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





कारये नवसिष्टोऽसुधन्वासुतः ६६ मयाहतोद्यभवतुरक्षबाणस्त्वपौरुषात् धन्योसिपार्थवीरस्त्वंयन्नि
मित्तंस्वकंहरिः ६७ पुण्यंददातीहरणेनूनंश्रेयस्तवाधिकम् ततोमुमोचबाणंसः सूर्यमंडलसन्नि
भम् ६८ पांडवः क्रोधनयनोयथास्वंकृपणोधनम् ब्रुवंतिगगनेदेवामानवाधरणींगताः ६९ किंभवि
ष्यतिकोजेताउभयोःकिंभविष्यति बाणात्समुत्थितोवन्हिर्गगनेसायकोगतः ७० अर्जुनस्यक
रान्मुक्तः प्रलयंकिंकरिष्यति ततोमहाबलोवीरः सुधन्वाचातिपौरुषात् ७१ द्वितीयंपार्थबाणंतंम
ध्येचिच्छेदसत्वरः शंखंदध्मौस्वकंसैन्यंहर्षयन्नृपितरंबलात् ७२ चकंपेवसुधादेवीबाणेछिन्ने
विशांपते ततःकृष्णोऽर्जुनंप्राहमाशरंयोजयार्जुन ७३ पांचजन्यंपूरयिष्येदेवदत्तंधमस्वच त्वंम
यासहितोवीरमेनंपश्यातिपौरुषम् ७४ जीवितंतद्भवेद्धन्यंनृणांकीर्तिसमन्वितम् प्रतिज्ञांस्वमु
खात्सत्यांकर्तॄणांस्वर्गकांक्षिणाम् ७५ मयायंपात्यमानस्तुदत्वापुण्यंपुरातनम् त्वयावीरेणचत
थापतनंनास्यजायते ७६ एतावदुक्त्वावचनंवादयामासवैहरिः पांचजन्यंदेवदत्तमर्जुनोपिमहा
बलः ७७ पूरयित्वापुनःप्राहकृष्णःकमललोचनः गृहाणसायकंहस्तेशीघ्रंपार्थममाज्ञया ७८
जैमिनिरुवाच गृहीतःसायकोहस्तेपांडवेनमहात्मना वासुदेवस्तुतंबाणंस्वह
स्तंदेवसंयुतम् ७९ ब्रह्माणंपश्चिमेभागेयोजयित्वाशरस्यहि मध्येकालंफलेतस्यौस्वयमेवज
नार्दनः ८० पुण्यंरामावतारेयत्कृतंतत्सायकेऽर्पितम् ततोहाहाकृतंसर्वंयदापार्थेनसंधितः
८१ सशरस्ताहृशोराजन्सुधन्वावाक्यमब्रवीत् सुधन्वोवाच जानामिगोविंदकृतंत्व
दीयंरणेर्जुनार्थंसहसावधेमे शरस्थितंविश्वतनुंभवंतंपार्थप्रतिज्ञांकुरुसंस्मराद्य ८२ अ
र्जुनउवाच अनेनबाणेनन्नपातयामिशिरस्त्वदीयंसकिरीटमद्य विभेदनाद्विष्णुगिरीश
योर्यत्पापंसमग्रंममचास्तुवीर ८३ सुधन्वोवाच राज्ञोशिवस्यापिगतश्चकाशींपूजांहरस्यं
घ्रितलेनपापः स्नातश्चतीर्थेमणिकर्णिकायांयःकोपिसोहंनभिदेशरंचेत् ८४ जैमिनिरुवाच त



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

तोऽर्जुनः संदधे सायकं तं सुदीप्तं वन्हिशिखादमतम् निःसारयंतं गगनेप्सरोगणान्देवान्भयान्मा
नवतानयंतम् ८५ वादित्राणि च सर्वाणि विनष्टानि शरस्वनात् भ्रांतं महीतलं बाणात्सुधन्वानं व्य
मोहयत् ८६ उवाच पार्थं कुपितस्त्वन्निमित्तं महाहवे सर्वे क्रूराः प्ररक्षंतु बाणं मत्तो हरादयः ८७ एष
श्छेद्मि न संदेहो ह्याहतोऽस्मि धनंजय लज्जां हंसध्वजो राजा प्राप्नोति जननी च सा ८८ भार्या च
मे विशालाक्षी कुलस्य तेसा प्रभावती नृसिंह त्वामहं वेद्मि पार्थस्य रथसारथिम् ८९ न परित्यज्य गंत
व्यमस्मिन्काले जनार्दन तिष्ठ गोविंद युद्धाय त्वं पार्थ कुरु पौरुषम् ९० एतावदुक्त्वा कृष्णं तु जगत्स्वाचि
च्छेद सायकम् पपात सायकस्यार्द्धं मध्ये छिन्नं सुधन्वना ९१ हाहाकारो महानासीच्छिन्ने बाणे
तथाविधे स्वबाहुं ताडयामास सुधन्वा रणमध्यगः ९२ चंद्रमंडलमेवाथ चकंपे बाणनाशनात् स
जलः पूर्वजस्मृं द्रोनिर्जलत्वं किरीटिनः ९३ प्राप्तवान्शरभंगेन तदद्भुतमिवाभवत् अर्द्धबाणस्य
शीर्षं न तद्रम्यं ज्वलितकुंडलम् सुधन्वनोपि चिच्छेद निधानं पौरुषस्य हि ९४ इत्याश्वमे
धिके पर्वणि जैमिनीये सुधन्वनो वधो नाम एकोनविंशोऽध्यायः १९ जैमिनिरुवाच
तच्छिन्नं त्वरितं प्राप शिरः कृष्णपदांबुजम् जपन्केशव रामेति नृसिंहेति सुदायुतम् १ अतिवे
गेन बभ्राम कबंधः समराजिरे क्रमात्सान्हयान्नागान्रथांश्चिक्षेप वेगवान् २ पार्थसैन्यं हतं
भूरि कबंधेन सुधन्वनः गृहीतं तच्छिरो रम्यं केशवेन पदे स्थितम् ३ उभाभ्यामपि हस्ताभ्यां सु
मुखं पश्यता तदा मुखाद्विनिर्गतं तेजः प्रविष्टं केशवानने ४ सुधन्वनोऽतिसत्वस्य कृष्णो जाना
ति नेतरः ततः स केशवस्तूर्णं चिक्षेप स्वकराद्यथे ५ हंसध्वजस्य तच्छीर्षं रम्यं ज्वलितकुंडलम्
हंसध्वजोपि जग्राह पतितं पुत्रकं रणे ६ गृहीत्वा संमुखं वीक्ष्य वचनं चेदमब्रवीत् हंसध्वज उवाच
सुधन्वन् किं कृतं पुत्र कथं तात न भाषसे ७ पिता हं तेन मां वेत्सि रुष्टोसि किमु सुव्रत कटाहे तैलत
प्तं त्वं मया क्षिप्तोसि पुत्रक ८ पुत्रस्नेहं परित्यज्य दंडेन परिपीडितः प्रतिज्ञा सफला युद्धे कृता कृष्णो

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





चतोषितो ९ प्रभावतीमनसिजः शमितोधीमतात्वया जैमिनिरुवाच वदनंपुत्रकस्याथचुचुंबेप्रहसन्निव १० स्वभालेतस्यतद्भालंयोजयित्वास्थितोरथे पुनरेवाहराजासोपुत्रशोकेनपीडितः ११ उत्तिष्ठपुत्रपार्थस्यगृहाणतुरगंबलात् प्रद्युम्नप्रमुखैर्वीरैः समंयुद्धंरणेकुरु १२ जनन्याभाषितंसत्यंकृतंकुवलयोदितम् शृण्वंतुभ्रातरः सर्वेत्वदीयाः सुरथादयः १३ मयार्थितः सुधन्वासौनब्रूतेनैवगच्छति तस्यतद्भाषितंश्रुत्वासुरथोवाक्यमब्रवीत् १४ सुरथउवाच किमर्थंरोदनंतातक्रियतेयत्त्वयारणे करेगृहीत्वापुत्रस्यशीर्षंयुद्धेमृतस्यच १५ हंसध्वजउवाच रोदनेकारणंचैकंसंजातंपुत्रकस्यमे छिन्नंशिरोस्यपतितंमाधवस्यपदांबुजे १६ तत्पदंतुपरित्यक्तंकृष्णास्यशिरसामुना महतासुकृतेनापिप्राप्यतेहरिसन्निधिः १७ दुष्कृतेनातिघोरेणवियोगस्तस्यजायते किंवास्यदुष्कृतंघोरममवापरितिष्ठति १८ कृष्णांघ्रिपंकजगतंचंचरीकनिभंशिरः क्षणमात्रंनस्थितंतद्रोदनंममजायते १९ त्यक्तंकृष्णेनसुरथममोपरिसुधन्वनः आगतंपश्यतेभ्रातुः शिरोज्वलितकुंडलम् २० एतत्त्यजामिकृष्णस्यरथेपुत्रशिरोमहत् जैमिनिरुवाच हंसध्वजेनतच्छीर्षंत्यक्तंकृष्णरथेपुनः २१ कृष्णोगृहीत्वाचिक्षेपगगनेऽतर्हितंचतत् सुरथोऽपिस्वजनकंप्राहदुःखात्सवारयन् २२ पश्याद्यतातमेयुद्धंकृष्णयोश्चमयासह क्रियमाणंसमक्षंतेसर्वेपश्यंतुसैनिकाः २३ कृष्णानस्वसुरवेक्षिप्तोममभ्राता महाबलः तमद्यकेशवंभेत्स्येपार्थंचरथिनांवरम् २४ यद्यहंपुरतस्तिष्ठेद्देवकीनंदनोहरिः एतावदुक्त्वावचनंरथमारुह्यसत्वरः २५ सैन्येनमहतायुक्तः पार्थयोद्धुमुपाययौ स्वशंखंपूरयित्वाग्रेसिंहनादमथाकरोत् २६ रसातलंभिन्नमिवसंजातंजनमेजय गृहीत्वासधनुर्हस्तेसुरथः पार्थमब्रवीत् २७ तिष्ठपार्थाद्यसंग्रामेमयासहमहाबल सम्यक्कृष्णार्जुनंपाहिसुरथोस्मितवाहितः २८ सुधन्वामेस्थितोयुद्धेस्वपुण्येनत्वयाहरे बालश्चेद्घातितादेवस्वहानिर्नानिशीक्षिता २९



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

यथाकश्चिच्छिशुःकृष्णमौक्तिकानिप्रयच्छति गृह्णातिबदराण्येवतथापुण्यंत्वयार्पितम् ३० सुधन्व
नोजीवितंतुगृहीत्वाबदरोपमम् मुक्ताफलंत्वयादत्तंकःकेनपरिवंचितः ३१ गोपालोसिनसंदेहो
नसांजानासिकेशव कुतोगतःसुधन्वामेनाहंपश्यामिबांधवम् ३२ अद्यपांडवमासाद्यपरोहर्षः
प्रजायते जैमिनिरुवाच तंतथाविधमालोक्यपार्थंकृष्णोब्रवीद्वचः ३३ नचास्यपु
रतःस्थेयंत्वयापार्थमहाहवे भ्रातृदुःखेनसंतप्तःसुकृतोचमहाबलः ३४ अन्येगच्छंतुकेवीराः
सुरथंयोधितुंरणे भवान्गंताद्यचेद्वीरंमहानर्थोभविष्यति ३५ अर्जुनउवाच अशक्या
नांसहस्राणित्वयाभग्नानिमेहरे अनेनसुरथेनाद्यानर्थःकीदृग्भविष्यति ३६ श्रीकृष्ण
उवाच द्वितीयांसृष्टिमारब्धुंवीक्ष्यचैनंरणेस्थितम् पितामहस्यमहतीचिंताजायेतसर्वदा
३७ सुरथस्यबलंभूरिस्वल्पंतवधनंजय त्वयाममतंकार्यंकृतमस्तिपुरासदा ३८ प्रद्युम्नप्रमु
खावीराःपातयंतुमहाहवे उपायोविद्यतेनास्यपातनेपांडवर्षभ ३९ त्वदर्थंसुकृतंदत्तंसुधन्वाकृच्छ्
तोहतः किंचिद्यस्यभवेत्पार्थदुष्कृतंसुकृतंबहु ४० विजयेतस्यजायंतेसिद्धयोत्रनसंशयः केव
लंसुकृतंचास्यशरीरेपरितिष्ठति ४१ यस्मिन्क्षणेनपुंसोत्रसुकृतंविद्यतेऽनघ व्याघ्रतस्कररराज
न्यसर्पाग्नीनांभयंभवेत् ४२ तस्मिन्क्षणेनसंदेहःकुतःसुकृतकारिणाम् जैमिनिरु
वाच समाहूयाब्रवीत्पुत्रंमाधवोरुक्मिणीसुतम् ४३ सर्वथाबहुभिर्वीरैःपातनीयोमहाब
लैः सुरथोरणमध्येतुगृहीत्वायामिपांडवम् ४४ कृष्णस्यवचनात्सर्वेनिर्गतायोधितुंनराः
अर्जुनस्यरथंकृष्णःप्रेरयामाससंगरात् ४५ योजनानांत्रयंभूमिर्यत्रातिष्ठत्ससत्वरः पश्चाद्युद्धं
समभवत्सुरथेनापरैःसह ४६ सुरथस्तत्रकोपेनभ्रातृहंतारमाहवे योद्धुमायात्ततस्तौतुनदृष्टौ
कृष्णपांडवौ ४७ सुरथस्तुततोवाक्यंरणेप्राहप्रतापवान् शत्रुंसुधन्वनोनात्रपश्यामीतिरणांगणे
४८ शिशुभिःसहयोद्धव्यंमयाशोच्यैःकथंत्विह अपराधिनावुभावेतौकृष्णपार्थौनसंशयः ४९ एता

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





न्निवार्यपश्चात्तोहन्मियुद्धेमहाबलौ पातालेचांतरिक्षेवाक्कयास्येतेममाग्रतः ५० एतत्सर्वंविनिश्चित्यसुर थःप्राहसैनिकान् सैन्यमध्येनपश्यामिक्कयातौकृष्णपांडवौ ५१ सैनिकाऊचुः किंवृथाजल्पसे वीरप्राकृतःकातरोयथा येस्थिताःपुरतोयुद्धेतेस्त्वंयुध्यस्वसंगरे ५२ पश्चाद्ददर्शसितंकृष्णंपार्थंचतवैरि णम् एतावदुक्त्वातैःसर्वैःसुरथःपरिवारितः ५३ सुरथस्तान्महावीरान्नाराचैःसमयोधयत् केचि न्निपतितावीराःकेचिन्मध्येविदारिताः ५४ गदयाछिन्नशिरसोहतवाह्नाःस्मशेरते हाहाभूतंबलंस र्वंकृतंवीरेणतत्क्षणात् ५५ योजनानांत्रयंसैन्यमध्येव्यूहस्ययत्स्थितम् भिन्नंतत्तेनराजेंद्रप्राप्त- स्तत्रयतोहरिः ५६ ददर्शकेशवंवीरंपार्थंचरथिनांवरम् वासुदेवंतुबाणौघैःसमंताद्व्यकिरत्तदा ५७ पार्थोपिविद्धोराजेंद्रशरैःकंकैःसुभेदनैः धनंजयस्तसमरेतिष्ठतिष्ठेतिचाब्रवीत् ५८ ततोबाणस हस्रेणसस्सूतंसहयंनृप ताडयामासवेगेनसुरथंशत्रुतापनम् ५९ धनुश्चिच्छेदसगुणंध्वजंसह पताकिनम् रथश्चतिलशस्तस्यसुरथस्याहवेकृतः ६० हयान्निहत्यचबलात्तंविव्याधशतेनच सुरथःपांडवंवीरंचकारशरपूरितम् ६१ नानाशस्त्रैस्तथास्त्रैश्चतयोर्युद्धमभून्नृप ततःसकेशवो राजन्पांडवंप्राहसंगरे ६२ पश्यवीरस्यधैर्यत्वंयुद्धंचकुरुतेयथा सुधन्वनोवियोगेनमन्येसैन्यंव धिष्यति ६३ एनंत्यक्त्वागतश्चाहंनमांत्यजतिचार्जुन अयमेवाग्रतोयोद्धादृश्यतेत्वयामया ६४ पश्यबाणैर्जगद्व्याप्तंनास्यवीर्यंप्रलीयते कृष्णस्यवचनात्पार्थःकुपितोवाक्यमब्रवीत् ६५

अर्जुनउवाच एनंदेवहनिष्यामिमहावीरंतवाग्रतः नासाध्यंवि- द्यतेकिंचित्प्रसादात्तवकेशव ६६ जैमिनिरुवाच ततोजघानसुरथंसायकानां शतेनच सुरथस्यरथोवेगात्गगनेतत्क्षणेगतः ६७ पार्थंविव्याधकृष्णंचशरैश्चित्रैः- शिलाशितैः उवाचप्रहसन्वीरःपांडवंश्वेतवाहनम् ६८ रथंतेमेदिबाणौघैस्तंपार्थ परिपालयशरप्रहाराभिहतोरथोबभ्राममभूतले ६९ अर्जुनस्यसकृष्णस्यसरुद्रस्यमहारणे ततःप



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

न्यां रथं पीड्य वासुदेवः क्रुधान्वितः ७० धरां प्रवेशयित्वा ये तथापि परिनीयते नरथः स्थित एवात्र कृ-
ष्णौ विस्मयमाययौ ७१ शिलाशतैर्गारुडपत्रैर्भिन्नौ कृष्णार्जुनावुभौ पांचजन्यं पूरयित्वा देवदत्तं धनंजयः
७२ कृष्णाश्वतरसा रोषात्पांडवं वाक्यमब्रवीत् श्रीकृष्णउवाच मयाधृतोपि हि रथः
सुरथस्याशुगेनतु नीयतेऽत्र बलादेव विरथं सुरथं कुरु ७३ ततोर्जुनो रणे क्रुद्धस्तस्य दिव्यं महारथम्
सहयं सध्वजं बाणैः ससूतं शतधाच्छिनत् ७४ विरथः सुरथो राजन् पांडवेन रणे कृतः तावत्सवन
पुत्रेण स्वलांगूलेन वेष्टितः ७५ रथः पार्थस्य खे मध्ये सुबद्धस्तत्क्षणात्कृतः संधारितश्च कृष्णेन न
जगाम स्थितः पुनः ७६ सुरथउवाच वेद्मि केशवभारेण नष्टं पार्थ रथं तव उ
भाभ्यां नीयते योधस्त्वमहं चोद्धरे पुनः ७७ गृहीत्वा स्यंदनं चान्यस्त्वबलेन नृपात्मजः मग्नं रथं स
मुत्थाप्य पुनः प्रोवाच हर्षितः ७८ वद पार्थ कुतो युद्धाद्विक्षिपामि रथं तव सागरे वाथ मेरौ वा तस्मि
न्वा हस्तिनापुरे ७९ रथस्थेनापि पार्थेन ताडितः पंचभिः शरैः सुरथो मूर्छितो राजन्मुक्तः सच
रथः करात् ८० मूर्च्छां विहाय सुरथो रथमन्यं समाश्रितः तावुभौ क्रूरनयनौ पुनरेवाभ्ययुध्यताम्
८१ अर्द्धचंद्रैश्च नाराचैर्वत्सदंतैः शिलीमुखैः वाराहकर्णनालीकैः क्षुरप्रैः कंटकामुखैः ८२
सुरथउवाच प्रतिज्ञां कुरु वीराद्य पार्थ सत्यां तु कांचन प्रतिज्ञातेनानृतात्र संजातेति प्र
शस्कृतम् ८३ अर्जुनउवाच त्वामहं निहनिष्यामि समक्षं जनकस्य ते प्रतिज्ञातं
मया वीर त्वं ब्रूहि स्वां यथोचिताम् ८४ सुरथउवाच त्वामहं पातयिष्यामि रथाद्भूमाविं
हार्जुन न कुर्यां चेद्वचः सत्यं सुकृतं मे प्रणश्यतु ८५ जैमिनिरुवाच एतस्मिन्नंत
रे वीरः पार्थं च शरवृष्टिभिः छादयामास राजेंद्र पांडवोऽपि तथाकरोत् ८६ शतमष्टोत्तरं पार्थो रथा
नां सुरथस्य च व्यधमच्च तथा रोषाद्बलं च निहतं बहु ८७ अर्द्धचंद्रेण सुरथश्चिच्छेदास्य महात्मनः का
र्मुकज्यां सनाराचैः पांडवं प्रत्यविध्यत ८८ पुनः कृत्वोऽर्जुनः सींहि कार्मुकं गुणसंयुतम् विरथं राजपुत्रं

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





तंशस्त्रास्त्रैश्चसमन्वितम् ८९ अर्द्धचंद्रेणविव्याधबाहुमूलेधनंजयः छिन्नोस्यदक्षिणोहस्तोना-
नालंकारमंडितः ९० निपपातधरादेशेविस्फुरन्ससुखोऽर्जुनम् स्फूरथोवामहस्तेनगृहीत्वामहतीं
गदाम् ९१ पार्थस्यतुरगान्क्रुद्धोजघानचजनार्दनम् सहस्रंसगजानांचपातयामासभूतले
९२ द्वेसहस्रेरथानांचहयानामयुतंरणे इतस्ततोधावमानःस्फूरथोरथिनांवरः ९३ तिष्ठपार्थ
हरेतिष्ठतिष्ठंतुबलिनोनृपाः ब्रुवन्जघानतरसापत्तीनामयुतंबली ९४ ततोऽर्जुनेनवामोस्य
सगदःपातितःकरः कराभ्यांवर्जितोवीरःस्फूरथःपार्थमब्रवीत् ९५ आत्मानंरक्षपार्थाद्यरथंपा
लयमाधव धनंजयंनिजंमित्रंप्राप्तोस्मितवचाहितः ९६ जैमिनिरुवाच धाव
मानोमहावीरश्छिन्नहस्तोऽर्जुनंप्रति तमायांतंतदापार्थोनवभिःसायकैर्नृप ९७ विव्याधतद्
दयेरोषाद्द्वाभ्यांपादौचचिच्छिदे छिन्नपादोऽपिस्फूरथोयावद्यातिरथंप्रति ९८ सर्वदेवमयेना-
थबाणेनास्यमहच्छिरः सकुंडलंदीर्घनेत्रंतावच्चिच्छेदपांडवः ९९ छिन्नपादंकबंधंतद्धावमान
मितस्ततः पातयामासबहुलसैन्यंपार्थस्यकूटवत् १०० शिरोलग्नंपार्थभालेमूर्च्छितस्तेनपांड
वः भूमौपपाततच्छीर्षंकृष्णास्यपदमन्वगात् १ इत्याश्वमेधिकेपर्वणिजैमिनीयेस्फूरथवधो
नामविंशतितमोऽध्यायः २० जैमिनिरुवाच कृष्णोगृहीत्वातच्छीर्षंहस्ताभ्यामब्रवीत्त
तः समुत्थाप्यार्जुनंचादौसमारोप्यस्वकेरथे १ वेत्सिपार्थमहाबाहुंस्फूरथंतथ्यवादिनम् प्रतिज्ञा
पालितायेनकृतासत्यामभांतिके २ अर्जुनउवाच पातितोस्यमुनादेवत्वत्प्रसादात्पु
नःस्थितः तन्नकौतुकमेवात्रधन्योयंनेतरोजनः ३ तद्देहिममहस्तेद्यवंदाम्येतच्छिरोमहत् य
थाभूरत्वमायातिस्पर्शात्तुशिरसोहरे ४ गृहीत्वातत्स्वयंपार्थोविवदेश्मस्फुलरणे कृष्णःसस्मारगरुडं-
स्मृतमात्रःसमागतः ५ वैनतेयोनमस्कृत्यस्वनाथंचाग्रतःस्थितः श्रीकृष्णउवाच गृहीत्वे
तद्विशालाक्षंशिरस्त्वंतीर्थराजनि ६ मयागोपालयाऽऽकृत्वंनियोगान्ममकाश्यप गरुडउवाच जल



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

मात्वंतत्रगंगायमुनाचसरस्वती ७ पातितेनूनमेतस्यकिंकार्यंचभविष्यति माधवोऽत्रभवान्भातिकि-
मर्थंनीयतेमया ८ गंगाजलेमनुष्यस्ययावदस्थिप्रतिष्ठते तावत्सदेहीस्वर्गस्थः कुरुतेऽमृतभोज
नम् ९ तवाननेमहत्तेजः प्रविष्टंस्फुरथस्यहि तथापितत्रयास्यामिसतामाज्ञागरीयसी १० तवदा-
सोऽस्मिगोविंददीयतांमस्तकेशिरः श्रीकृष्णउवाच पावनंतत्प्रयागंमेभविष्यत्यसु-
नारवग ११ कोशेमदीयेवीरस्यशिरोरत्नंप्रपातय जैमिनिरुवाच वैनतेयोगृहीत्वाथसुर
थस्यमहच्छिरः जगामगगनेयावत्तावत्तद्ददृशेहरः १२ पार्वतीसहितोनाकेवृषारूढोगणैर्वृतः कै
लासनाथोभगवान्वरदःशूलधारकः १३ चराचरगुरुःशंभुःसृष्टिकृल्लोकपालकः पितामहादिदेवा
नामाराध्यःसुरथस्यकम् १४ नीयमानंकाश्यपेनप्रयागंप्रतिमारिष उवाचभृंगीलोकेशोयाहि
त्वंगरुडंप्रति १५ पार्वतीप्रत्युवाचाथकिमेतन्नीयतेऽमुना गरुडेनविरूपाक्षपरंकौतूहलंहिमे १६
श्रीशिवउवाच अर्जुनेनहतोवीरःशिरोऽस्यगरुडःशुभे आदिष्टःकिलकृष्णेनप्रयागेया
तिपातितुम् १७ मयायंप्रेरितोभद्रेसमानेतुंममांतिकम् भृंगीतन्मुंडमालार्थेशिरोज्वलितकुंडलम्
१८ भ्रातुरस्याहृतंपूर्वंशिरःकमललोचने सुरथस्यद्वितीयंमेभविष्यतिसुभूषणम् १९ धर्मिष्ठा
नांवदान्यानांकृतज्ञानांसदामया शूराणांजितकामानांसिरसांमंडनंमहत् २० ध्रियतेकिलवामोरुने
तरेषांकदाचन जैमिनिरुवाच महादेवस्यवचनंश्रुत्वाभृंगीखगाधिपम् प्राप्यवेगेन
महताचेदंवचनमब्रवीत् २१ भृंग्युवाच वैनतेयमहाभागदेहिलंमस्तकेशिरः त्वत्तोबला
द्ग्रहीष्यामिनमांवेत्सिखगाधिप २२ नाहंसर्पोवैनतेयभयंकुर्वेनतावकम् मुंचमुंचनजानासिममते-
जःसुदारुणम् २३ ततस्तंगरुडोभृंगींपक्षाभ्यामवधूयहि जगामतीर्थराजेहिभृंगीत्रिनयनंगतः २४
पक्षवातेनघोरेणतरसाशुष्कपर्णवत् पार्वतीतंसमीक्ष्याथप्रहसंतीवचोऽब्रवीत् २५ पार्व
त्युवाच शिवदूतनजानासिगरुडंहरिवाहनम् यस्यत्वंपक्षवातेनप्राप्तोऽसिहरस-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





न्निधौ २६ शंभुकगात्रं कथं दूतं बलहीनं हि शंकर भवांस्तन्नोदयेद्धीरं गरुडं पन्नगाशनम् २७ वृ
षोऽहं योयस्यपत्रं प्रियासागरगामिनी गजचर्मपरं वस्त्रं शस्त्रं खट्वांगमेव च २८ प्रियावचनमाक
र्ण्यप्रसन्नः शंकरोऽब्रवीत् श्रीशंकरउवाच वृषगच्छमयाज्ञप्तो वेगेनतेया
त्समानय २९ यथादूतबलं वेत्तिपार्वतीवरवर्णिनी नंदीहरसमादिष्टो जगामगरुडंप्रति ३० गृही
तुं तच्छिरोरम्यं कोपेनमहतायुतः वृषनासाप्रवातेन गरुडस्य कलेवरम् ३१ बभ्राम भूतलं सर्वं
तस्मिन्कालेविशांपते नशशाकस्ववातेननीयमानं खगाधिपम् ३२ तदाधारयितुं रोषात्तूलं
गजइवांगणे वनानि सरितश्चैव गिरीन्याति च सागरान् ३३ सत्यलोकं च कैलासं वैकुंठमपिपा
वनम् ततोदैववशाद्देवप्रयागमगमत्खगः ३४ मुमोचतीर्थे तत्राशु कृष्णवाक्यमनुस्मरन् प
तितं जलमध्ये तु गृहीतं नंदिना तदा ३५ गरुडोऽपि महाविष्णुं पुनः प्राप्तो हसन्निव नंदी ददौ शंभु
करे शिरोज्ज्वलितकुंडलम् ३६ शंभुना मुंडमालायां मध्ये रत्नं शिरःकृतम् हंसध्वजोऽपि तत्पु
त्रं पतितं वीक्ष्य सत्वरः ३७ रथमारुह्य सबलः प्रायाद्योद्धुं धनंजयम् कंपिता पृथिवी देवी शेषोऽ
पिचलितोभवत् ३८ तंवीक्ष्य कुपितं वीरं सबलं तरसा हरिः रथात्समुत्तीर्य तदा प्रसार्य स्वकरौ—
स्थितः ३९ उवाच केशवो वीरं हंसध्वजमकल्मषम् श्रीकृष्णउवाच आलिंग
नं देहि विभो प्रीतिश्च महती त्वयि रणात्कोपं परित्यज्य पुत्रशोकं च मारिष ४० हंसध्वजो वीक्ष्य
हरिं रथाद्भूमिमगात्तदा समालिंग्य हरिं तस्थौ प्रहसन्वाक्यमब्रवीत् ४१ हंसध्वजउ
वाच प्राप्तोस्म्यनाथो नाथत्वात्पुत्रशोकश्च कीदृशः भवाद्भयं न मे देव नान्यतो वा
नकालतः ४२ श्रीकृष्णउवाच मुंचाश्वं पांडवं रक्ष गमिष्यामि युधिष्ठि
रम् यथाहं पांडवस्यार्थे संत्यजामि कलेवरम् ४३ तथा भवानपि रणे पालयत्वेनमर्जुनम्
पार्थ पश्य स्सरवायं मे रथोपरि सुसंस्थितम् ४४ ततोऽर्जुनं समानीय केशवः क्लेशनाशनः उभयोः



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

संगतं कृत्वा मोचयित्वा तुरंगमम् ४५ पंचरात्रं स्थितस्तस्मिन्नगरे केशवो गतः युधिष्ठिरस्य नगरं प्राप्य सर्वं न्यवेदयत् ४६ तुरगो बंधनान्मुक्तः परिबभ्राम मेदिनीम् तमनुप्रययौ पार्थो भिरालब्ध्वजसंयुतः ४७ प्रद्युम्नप्रमुखैर्वीरैः पाल्यमान उदक्मुखः मुक्तमात्रः स तुरगः प्राप्तो देशान्भयानकान् ४८ रथिभिः पंचभिः सार्द्धं पार्थस्तन्नैव मुंचति हंसध्वजो विशालाक्षो रुक्मिणीतनयस्तथा ४९ अनुशाल्वो महाबाहुर्वृषकेतुर्महाबलः सुवेगः पंचमश्चैव सर्वे पश्यंति पांडवम् ५० तुरगो जलपानार्थं प्रविष्टो नलिनीयुतम् महत्सरो भवत्तत्र तुरगी निर्गता बहिः ५१ तां वीक्ष्य विस्मिताः सर्वे किमिदं दैवकारितम् तुरगस्तुरगी जाता वनं चैतत्सुदारुणम् ५२ पृष्ठतोऽनुययुः सर्वे ततः प्राप्ता परंसरः प्रविष्टा जलमध्ये सा ततो व्याघ्रो बभूव ह ५३ अब्रुवन्पार्थमुख्यास्ते किमिदं हि भविष्यति निर्ययौ सोऽपि मृगयुस्तस्मात्तोयाज्जनाधिप ५४ जनमेजय उवाच आश्चर्यं भवता चोक्तं वने तस्मिन्महामुने किं कारणं जले तस्मिन्प्रविष्टे तुरगे तदा ५५ तत्क्षणाद्वडवा जाता कारणं तत्र किं द्विज किं तत्सरो वनं किं तद्वडवा केन हेतुना ५६ जाता पुनर्व्याघ्रतां च सर्वं संशाधि तं विभो स कथं तुरगो जातः पुनरेवं वदस्व तत् ५७ जैमिनिरुवाच शृणु राजन्पुरा वृत्तं वने चास्मिन्सरोवरे उमा वनं सरो रम्यं तया तप्तं महत्तपः ५८ रुद्रः प्रसन्नः सततं मम भूयादितीच्छया तपश्चरामि भो स्वामिन् विघ्ननाशं सदा कुरु ५९ इति संकल्प्य सा देवी चिरं तेपे महत्तपः तत्र कश्चिद्दुराचारो दैत्यो विघ्नार्थमागमत् ६० स प्राह देवीं तत्रस्थां किमर्थं तप्यसे तपः वपुस्ते सुंदरं भद्रे किं समलभ्यं तवाधुना ६१ सर्वदास्याम्यहं तुभ्यं मम भार्या भवानघे निशम्य नीचवाक्यानि सा देवी कुपिता च तम् ६२ शशाप रोषताम्राक्षी भस्मीभव सुदुर्मते ततस्तु भस्मसात्कृत्वा प्राह सा वनदेवताः ६३ अद्यप्रभृति मद्वाक्याद्वने चास्मिन्सरोवरे स्त्रीलिंगचिन्हितो दुष्टः पुरुषो नात्र संशयः ६४ तदाप्रभृति भो राजन्प्रविशेद्यः पुमान्कुधीः स्त्रीचिन्हं दृश्यते सद्यो देव्याः शापेन पांडव ६५

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





अतोऽयंतुरगः सद्योजलस्पर्शेनतत्क्षणात् वडवात्वंसमापन्नस्तत्सर्वंशापकारणम् ६६ यस्त्वयाद्य
परःप्रश्नोहरिर्व्याघ्रोयथाभवत् तमाकर्णयराजेंद्र पृच्छतःकथयामिते ६७ पुराकृतयुगेविप्रअङ्गु
तव्रणसंज्ञकः पर्यटन्सकलांपृथ्वींतीर्थयात्रार्थमादरात् ६८ तत्रतत्रतपस्तप्त्वाकदाचित्कालपर्यया
त् इमंदेशमनुप्राप्तोदृष्ट्वाचैतन्महत्सरः ६९ स्नातुंप्रविष्टःशुद्धात्माजपन्मंत्रांश्चवारुणान् पीत्वास्ना
त्वाविधिवन्निर्गतःसजलाद्बहिः ७० जलग्राहस्तस्यपादेकश्चिल्लग्नःसुदारुणः दंतैस्तुदंतंतमृषिं
कर्षयंतंमहाजले ७१ दृष्ट्वातंदारुणंग्राहंकर्षयंतंपुनःपुनः कोयंदुष्टतरःप्राप्तोजलेऽस्मिन्कर्षतेब-
लात् ७२ दैत्योवादानवश्चायंमत्स्योदुष्टतरोऽथवा दुष्टेजलेप्रवेशोऽद्यकथमासीन्मतिर्मम ७३ इति
संचिंत्यमनसाकोपाविष्टोऽभवन्मुनिः शशापतज्जलंदुष्टंजलस्थांतत्रदेवताम् ७४ अस्मिन्जले
सुदुष्टेहियस्तुस्पर्शंकरिष्यति सतुव्याघ्रोभवेत्सद्योनानृतंममभाषितम् ७५ इत्युक्त्वाप्रययौवि
प्रोमोचयित्वाग्रहंबलात् तदाप्रभृतिपानीयमेतद्दुष्टमभून्नृप ७६ इतिपृष्टंत्वयायच्चतत्सर्वंकथि
तंमया भूयःकथंसतुरगोजातस्तत्तुनिबोधमे ७७ अर्जुनस्तुरगंदृष्ट्वाव्याघ्ररूपंभयानकम्
मनसाचिंतयामासविष्णुंसर्वभयापहम् ७८ यस्यप्रभावान्मुक्तास्मोदुर्योधनभयात्पुरा सदेवः
पातुमांत्वत्रविषमेऽस्मिन्सुदारुणे ७९ सैनिकान्मोहयन्रात्रौदिवाचयदुनंदनः यज्ञंयुधिष्ठिर
स्याद्यसिद्धिंनयतुसोऽच्युतः ८० इतिध्यात्वाहरिंपार्थस्तस्थिवानकुतोभयः तस्मिन्क्षणेव्याघ्ररू
पत्यक्त्वाचाश्वोऽभवत्पुनः ८१ पूर्वरूपंहयंदृष्ट्वाहर्षात्तेननृतुर्भृशम् नानाविधानिवाद्यानिवादयं
तोमुदाययुः ८२ ततोदैववशाज्जातःपुनःसतुरगोययौ नानाविधांस्ततोदेशांस्त्रीमयान्सुरसान
पि ८३ स्त्रियश्चसंतिगहनाःसरूपानवयौवनाः राज्यंनारीचकुरुतेनपुमांस्तत्रजीवति ८४ यस्ता-
सांसंगतिंकुर्याद्रूपलावण्यमोहितः सुखवासेनरम्येण नयनांचलताडितः ८५ गीतेनाथचनृत्येनहा
स्येनमृदुभाषितैः मासमात्रंस्त्रियंप्राप्यपश्चात्प्राप्नोतिवैशसम् ८६ रतंसमतरंकृत्वाविषमंदंशनं



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

पुनः नखप्रहारैर्विविधैर्हाहतास्मीतिभाषणैः ८७ ताडनैर्मुष्टिघातैश्च ग्रहणैर्मुखचुंबनैः जिह्वा
घातेन समदं कूजितैः पक्षिसन्निभैः ८८ नंदनैर्वीक्षणैर्वक्रैस्तवदासीतिभाषणैः आगतोऽसिगत
श्चासि त्वयाकान्यास्मृताऽधुना ८९ जननीतवकाश्वासा भगिनीगच्छमद्गृहात् भावलाभेनसहितः
संजातोवदसुव्रत ९० एवंविधैर्वचोभिस्ताः कुर्वंतिगतजीवितम् तेनैवस्त्रैनू लिंगेनप्रविशंतिहु
ताशनम् ९१ काश्चिज्जीवतिसागर्भंधत्तेकन्यांप्रसूयते प्रविष्टस्तुरगः पार्थोवीरैः पंचभिरावृ
तः ९२ उवाचतान्महावीरान्वयंस्त्रीमंडलेस्थिताः अत्रैताविषकन्याश्चतिष्ठंतिबलसंयुताः ९३
नयिष्यंतिहयंघोराः कष्टमत्रभविष्यति एवंब्रुवतिपार्थेचस्त्रीणांवृंदसमागतम् ९४ हयारूढं
चंपकाभंमुक्तामालाविभूषितम् नानालंकारसंयुक्तहावभावसमन्वितम् ९५ बद्धचामरमाकंठे
सतूणंसधनुर्धरम् अर्जुनाश्वंगृहीत्वाथनारीकाचननिर्गता ९६ स्वामिनीप्रतिगत्वासादर्शयामा
सवाजिनम् युधिष्ठिरस्यभ्राताऽत्रतुरगंप्रतिरक्षति ९७ तवादेशान्मयानीतस्तुरगः किंकरोम्यतः

राज्ञ्युवाच वाजिशालांनयैनंत्वंयामिपार्थंचयोधितुम् साचकारततः सर्वंराज्ञीणां
डवमन्वगात् ९८ इत्याश्वमेधिकेपर्वणिजैमिनीयेस्त्रीराज्यगमनंनामएकविंशोऽध्या
यः २१ जैमिनिरुवाच चंद्राननानांवीराणांलक्षेणपरिवारिता तुरगानधिरू
ढानांस्थितापार्थरथंप्रति १ पीनोन्नतकुचानांसाश्यामानांचारुलोचना गजकुंभस्थितानांहिलक्षे
णापिवृताबभौ २ रथमारूढनारीणांलक्षंचपुरतःस्थितम् लक्षत्रयंपांडवंतंपरिवार्यस्थितंरणे ३ प्रमी
लानामसाराज्ञीप्रत्युवाचधनंजयम् प्रमीलोवाच मयाधृतस्तेतुरगस्तंमोचयितुमिच्छ
सि ४ कुरुयुद्धंमयासार्द्धंव्यपनेष्यामितेबलम् सहस्वमत्प्रहारांस्त्वंधैर्येणमहतार्जुन ५ प्रथमंताडितः
पार्थोनेत्रभावैः प्रमाथिभिः ततोबाणेननिर्भिन्नोहृदयेगिरिदारिणा ६ सचूचकनिभाग्रेणतयास
स्थितयानृप ततोंतरेपंचवीराश्छिद्राः सर्वाभिरेवतं ७ कर्तव्यंविस्मृतंतेषांविनाकर्णसुतंतदा रा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





श्रीमाहार्जुनंवीरंनमांजानासिचार्जुन ८ त्वांविजित्यकरिष्यामिस्वदासंविद्धिपांडव किंकरिष्यसिया
गेनमयासहमधुंपिब ९ दर्शयिष्यामितेसौख्यंयन्नदृष्टंत्वयापुरा अर्जुनउवाच तवसं
गेनमरणंजायतेऽत्रमयाश्रुतम् १० यागार्थंपाल्यतेकेनतुरगःपांडवंविना प्रमीलोवाच
अर्जुनोभययथानूनंतवमृत्युरयंस्थितः ११ मच्छरैर्नभ्यनैर्वापिताड्यमानोनजीवसि मत्संगमात्सु
खावाप्तिर्निर्धनंहिमयासह १२ नाराचैःपीड्यमानोऽपिमृतोव्यर्थंगमिष्यसि जयिष्यामिवृथाना
हंतवपार्थरथेनच १३ शरैस्त्वांपातयिष्यामिनहित्वांचरतेनच वर्जितांजीवितंत्यक्ष्येतत्सर्वमव
धारय १४ आवयोर्मरणंप्राप्तंदर्शनादेवमारिष तस्मान्मदीयंरुचिरंयौवनंभुंक्ष्वपांडव १५
अर्जुनस्तांतदावीक्ष्यब्रुवंतींकामपीडिताम् लक्ष्मणश्चिंतयित्वाथतथाशूर्पणखांहृदि १६ निज
घानशरैःषड्भिस्तयातेपंचधाकृताः धनंजयंशरैर्घोरैःसप्तभिःसमताडयत् १७ पुनःशरसहस्रे
साऽदृश्यंचक्रेऽर्जुनंरणे मोहनास्त्रंपांडवोपिसंदधेकार्मुकेस्वके १८ प्रमीलामोहनास्त्रंतत्सगुणं
सायकैस्त्रिभिः छित्वाप्राहार्जुनंमूढमोहनास्त्रंनभातिते १९ अर्जुनःसगुणंकृत्वास्वधनुःकोपपूरि
तः यावत्पातयतेतांहिवाणीखेचाभवत्तदा २० मापार्थसाहसंकार्षीःसंग्रामेस्त्रीवधंप्रति नैव
शक्यात्वयाजेतुंवर्षाणामयुतेनच २१ इमांवरयभद्रंतेयदिजीवितुमिच्छसि इमांप्रब्रूहिनगरंत्वां
विनेष्यामिभामिनि २२ पार्थस्तद्भाषितंश्रुत्वासर्वंचक्रेयथोदितम् प्रमीलांवरयामासयुद्धभूमौनि
शांपते २३ उवाचतांविशालाक्षींसंगमंहस्तिनापुरे तवदास्यामिभद्रेऽहंव्रतस्थोहयरक्षणे २४
कृष्णस्यदर्शनाद्दोषागमिष्यंतिहितावकाः एतासामपिसर्वासांभर्तारोमत्पुरेशुभे भविष्यंतिनसंदे
होहयंसुंचव्रजाम्यहम् सहितावात्वमायाहिव्रजवाहस्तिनापुरे २५ ततोमुक्त्वातंतुरगंसा-
जगामयुधिष्ठिरम् हयोययौवृक्षदेशान्फलितान्मानुषैर्गजैः २७ स्त्रीभिर्गोभिश्चपशुभिरजा
विकरवैरैरपि प्रभातेचैवजायंतेमध्यान्हेयौवनान्विताः २८ सायंकालेम्रियंतेहिवृक्षेषुविविधाजनाः

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

यथैतत्रापिपार्थोसौविस्मयोत्फुल्ललोचनः २९ ततोदृशान्सविविधांस्तुरगगणसमन्वितः कर्णप्रावर
णानेकवक्त्रानेकाक्षपादकान् ३० हयाननांस्त्रिनेत्रांस्तान्दीर्घनासांस्त्रिपादकान् सशृंगानेकशृंगां
श्वखरवक्त्रानुपाययौ ३१ भीषणस्यपुरंप्राप्तोराक्षसस्यतुरंगमः राक्षसास्तत्रबहवोवसंतिपुरुषा
दकाः ३२ राक्षसाःकोपसंयुक्तादीर्घकालप्रजीविनः कोटित्रितयमेतेषांराक्षसानांपुरस्थितम् ३३
भीषणस्यपुरोधास्तुमेदोह्वासतुरंगमम् ददर्शभ्रममाणंहिकाननेब्रह्मराक्षसः ३४ ज्ञात्वापा
र्थहयंग्रामंभीषणस्यांतिकंययौ नरांत्रसूत्रसंभूतकंठेयज्ञोपवीतकम् ३५ बिभ्रन्नरकपाला
नांजपमालांभयानकाम् गजवक्त्रस्यशशकस्यसजलंहिकमंडलुम् ३६ नेत्रगोलकजांकंठेप्रोतां
घोरांस्त्रजंतथा गजदासिरकौयुक्तौकर्णयोस्तस्यभूषणे ३७ गजपृष्ठभवस्यास्थ्नोदंडंचसपलंक
रे उवाचभीषणंगत्वापार्थःप्राप्तस्त्वयाहितः ३८ तुरंगंपालयानोत्रविद्धितराक्षसाधिप पिता
हितेबकोनामनिहतोस्याग्रजेनसः ३९ एनंभीमानुजंशीघ्रंगृहीत्वायज्ञमाचर सर्वलक्षणसं
युक्तंनरमेधंममाज्ञया ४० आचार्योहंभविष्यामिसंत्यन्येब्रह्मराक्षसाः कुलीनाव्रतयुक्ताश्च
तुर्मास्यव्रतेस्थिताः ४१ येकुर्वंतिसुरापानंरुधिरेणापितोषिताः मासोपवासिनीनांतुमांसेन
श्रावणव्रतम् ४२ तथाभाद्रपदंप्राप्ययतीनामूर्ध्वरेतसाम् आहारेणैवजीवंतिआश्विनेचजटाव
ताम् ४३ कार्तिकेचकुमाराणांपलेनव्रतधारकाः तस्माद्धारयपार्थंहिससैन्यंहितुरंगमम् ४४
व्रतस्थाश्चिरकालंहिहितिष्ठंतिब्रह्मराक्षसाः गजान्धनंजयस्याद्यभक्षयंतुतथाहयान् ४५ नरा-
णांरुधिरेणैवसोष्णेनगलनालतः मांसेनचसमुदायुक्ताभवंत्वेतेव्रतापसाः ४६ रावणेनकृतोयज्ञो
नरमेधोमहात्मना तस्मिन्यज्ञेकृतृप्तास्तुसर्वेतेब्रह्मराक्षसाः ४७ सांप्रतंत्वत्कृतेयज्ञेवयंतृप्ताभवाम
हे भीषणउवाच सर्वंतातकरिष्यामियथोक्तंभवतामम ४८ पितृशत्रुपुरःप्राप्तःकथमद्यनधा
रये भवादृशैर्वृतश्चाद्यसुविप्रैर्ब्रह्मराक्षसैः ४९ एकंपृच्छामितावत्त्वांयज्ञेकिंतवभोजनम् मयादे-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





यंतवविभोपार्थसैन्यायथोचितम् ५० स्वरुचिंशंसत्तभवानिहयज्ञंसमाचरे मेदोहाउवाच
नराणामतिपुष्टानांमेदैःप्रीतिश्चलोचनैः ५१ गजानांचनराणांचहयानांनयनैर्मम मेदक्लिन्नैःपरा
तृप्तिस्त्वत्प्रसादाद्भविष्यति ५२ सहस्रमात्रंराजेंद्रपदातीनांचभोजनम् तवयज्ञेकरिष्यामिब्रह्माशी
र्नापरैःसमः ५३ तस्यभाषितमाकर्ण्यराक्षसोमुदितोभवत् चकारमंडपंरम्यमृत्विजश्चपुरोहित
म् ५४ यज्ञार्थंतरसायोद्धुंप्रायात्पार्थंचभूपति राक्षसानांचघोराणांवृतःकोटित्रयेणसः ५५ राक्ष-
स्यःपर्वतारूढाददृशुःपार्थमागतम् हनूमंतंविलोक्यैकाराक्षसीवाक्यमब्रवीत् ५६ राक्षस्युवाच
पलायध्वंपलायध्वंभवतीनांनजीवितम् वानरंचात्रपश्यामिनिहतायेनराक्षसाः ५७ रावणस्यपुरेदृष्टो
मयायंयत्रजानकी स्थिताशोकवनेदेवीतदाप्रभृतिमेभयम् ५८ जैमिनिरुवाच राक्षसी
वाक्यमाकर्ण्यप्राहलंबोदरापरा कृशाहस्तपदादीर्घग्रीवानल्पसमुच्छ्रया ५९ रावणंमावदनरान्मृत्युं
प्राप्तंममाग्रतः वानरंभक्षयिष्यामिसभयंपुरतस्तव ६० तांतुचैवापराप्राहकिंत्वयागदितंकृशे पश्य
मेतस्तनौदीर्घौस्थूलौभूमौविलंबिनौ ६१ योजनंप्राप्यमत्पृष्ठेकृश्यंतौद्रुमनाशनौ कुचेनपांडुवंहन्मि
हनूमंतंचवानरम् ६२ सैन्यंचभारतंवेगान्माभीतोराक्षसीगणः जायतांवानरान्मंदोनमांजानाति
भीषणः ६३ तावत्तृतीयाकुपितापुष्टांतांयोजनस्तनीम् जगादकिंभयंत्वत्तोगमिष्यतिकुचेनकिम्
६४ स्तनौतेयोजनप्रांसौबिल्वमात्रौममाग्रतः योजनंकुचयोःप्राप्तंचूचुकंममपश्यत ६५ सर्वांसां
व्यपनेष्यामिभयंहत्वाकपीश्वरम् एतावदुक्त्वावचनंपार्थसैन्यंनिरीक्ष्यसा ६६ उत्प्लुत्यगगनेतीव्राह्य
हाकृताप्रधाविता कुचाभ्यांभ्रममाणाभ्यांस्थूलाभ्यांसंगरेनृप ६७ पातयंतीबलंभूरिचूर्णयंतीमहा
गजान् यत्रयत्रकुचौलग्नौतत्रतत्पातितंबलम् ६८ परमाणुनिभंसैन्यंकृतंकेवलयातया उत्क्षिपंतीग
जानश्वान्नरानपिसुदारुणान् ६९ अन्याश्चबह्व्योराक्षस्यस्तथाचक्रुःक्षयंरणे राक्षसास्तेपितान्वी
रान्पातयामासुराहवे ७१ भीषणःपार्थमासाद्यचेदंवचनमब्रवीत् भीषणउवाच तिष्ठ-



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

पार्थकुतोयासिदिष्याहृष्टोसिसंगरे ७१ भीमेनमेहतस्तातस्तदाहंनसमीपगः त्वामद्यसंगरेजि
त्वानरमेधंसमाचरे ७२ ततोभीमंवधिष्यामिपास्यामिरुधिरंबलात् ततोमुमोचबाणोघान्
मुद्गरान्पर्वतान्द्रुमान् ७३ पांडवंपीडयामासराक्षसैःसहितोबली अर्जुनस्तुतथाभूतमग
णंराक्षसंशरैः ७४ बिभेदशतसाहस्रैः समंताल्लोमवाहिभिः हनूमान्राक्षसीनांहिचकारकदनं
महत् ७५ लांगूलवेष्टिताःसर्वास्ताडिताधरणीतले गतप्राणाभिन्नगात्राःकीर्णकेश्योहताश्चताः ७६
भयात्पलायिताःकाश्चिद्धाताःपर्वतसानुषु रक्षोघ्नैःपांडवोमंत्रैःसंमंत्र्यनिशितान्शरान् ७७ मुमो
चराक्षसबलेभीतास्तेदुद्रुवुर्वने भीषणःससृजेमायांराक्षसींक्रोधपूरितः ७८ सद्योभवन्पर्वता-
श्चसिंहाश्चशतशोगजाः शार्दूलाःशरभाव्याघ्रास्तरक्षाविद्युतःकृताः ७९ भीषणेनरणेराजन्पांड
वंप्रतिमायया आश्रमेऋषिरेवासील्लीनशांतमृगद्विजे ८० गंगातीरस्वशिष्येभ्योनिगदन्विगतस्पृहः
अर्जुनंप्राहनरसाराक्षसैस्त्रासितावयम् ८१ नलभामःसुखेनैवतपःकर्तुंधनंजय स्वागतंतेऽस्तु
तिष्ठत्वंवसआघूर्णिकोभव ८२ ऋषीणामाश्रमेभुक्त्वालभंतेक्षत्रियाबलम् कियंतमथकालंत्वंस्थित्वा
पार्थमयासह ८३ अभ्यस्यविद्यांसुचिरांमयादत्तांधनंजय तयाह्येतेमरिष्यंतिराक्षसानात्रसंशयः
८४ ज्ञात्वामायांपांडवोऽथनिहत्यचऋषींभीषणम् गृहीत्वाकांचनंतस्यरत्नानिविविधानिच ८५ हयां
स्तित्तिरकल्माषान्छत्रंदिव्यंचकुंडले ततोजगामपुत्रस्यसहयःश्वेतवाहनः ८६ रम्यंमणिपुरंनाम
बभ्रुवाहनपालितम् नराःसत्यव्रतायत्रनार्यश्चपतिसेवकाः ८७ वेदार्थशास्त्रनिपुणोभातियत्रम-
हाजनः चिंतनंवासुदेवस्य नान्यांचिंतांप्रकुर्वते ८८ बंधनंकेशपुष्पाणांपशूनांसदयाइव प्रकुर्वंति
चसंघातंसारीणांकामिनीयुताः ८९ स्वप्नेपिनानृतंयत्रप्रवदंतिजनाःक्वचित् मुक्ताश्चकामिनीनांहि
हृदयेपिचमस्तके ९० नासाग्रेभांतिराजेंद्रसंतोयावृत्तलोलकाः शूराश्चयत्रशतशोबभ्रुवाहनपूजि
ताः ९१ महाकालमपिप्राप्तंतोषयंतिबलेननम् विमुखानरणेवीरानार्थिनापुरतःक्वचित् ९२ जायंतेदे

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



हदानेनवदान्याः प्रार्थिताः सदा प्राकृतस्यजनस्यापि मुखाद्वाणीसुसंस्कृता ९३ निर्यातिसर्वदायत्र प्राप्तस्तत्रतुरंगमः तुष्टपुष्टजनाकीर्णंनित्योत्सवविभूषितम् ९४ रम्यंसुवर्णप्राकारंनगरंचार्जुनेश्व तत् रक्षितंचमहावीरैः सबलैर्वीर्यशालिभिः ९५ सहस्रंशकटानांहिपूरितंकांचनेनवा हंसध्वजादिभिर्दत्तः प्रत्यहंनृपतेः करः ९६ सुवर्णरूप्यरत्नैश्चबभ्रुवाहनकारितम् सुचित्रगृहवीथीभिः प्रासादैर्गोपुरैर्मठैः ९७ द्वितीयमिववैकुंठंस्थापितंविष्णुनाक्षितौ निरीक्ष्यतत्तथारूपंनगरंचार्जुनोब्रवीत् ९८ वयंकुतोत्रसंप्राप्तामरालध्वजशंसमे ९९ इत्याश्वमेधिकेपर्वणिजैमिनीयेमणिपूरागमनंनामद्वाविंशोऽध्यायः २२ जैमिनिरुवाच हंसध्वजः पार्थवचः समाकर्ण्यब्रवीत्स्वयम् बभ्रुवाहननामात्रनृपतिर्वर्ततेऽर्जुन १ यस्मैसुवर्णसंपूर्णंशकटानांसहस्रकम् प्रत्यब्दंदीयतेपार्थमयान्यैः पार्थिवैः सदा २ रम्यंमणिपुरंतस्यसंगतास्मोहयान्विताः तेजस्वीसबलः प्राज्ञोवेदार्थमनुवर्तकः ३ वृद्धानुशासनेमग्नः परस्त्रीविमुखः सदा दातॄणांप्रथमश्चैकोयथानारायणोहरिः ४ सुमतिश्चास्यविख्यातोमहासत्वपराक्रमः सेनानायोस्यधीरोत्रसकोपंशंकरंसहेत् ५ परस्यसुकृतंकर्मपरमाणुनिभंरणे राज्ञोनिवेदयत्येवनस्मरत्यपकारकम् ६ हयंग्रहिष्यंतिय दिसैनिकाश्चास्यभूपतेः क्लेशेनमहतामोक्तुंशक्नुमोवाजिनंपुनः ७ एवंब्रुवतिवीरेहिगृध्रः परमदारुणः धनंजयकिरीटाग्रेस्थितोमृत्युप्रदर्शकः ८ तेनतेविस्मिताः सर्वेत्रासंजग्मुश्चकंपिरे ॥ जैमिनिरुवाच परंतुरंगंनगरेश्चलाधावंतमागतम् ९ पाल्यमानंमहावीरैः सबलेनकिरीटिना ग्राहयामासराजासौलीलयाबभ्रुवाहनः १० वीराणांयुधिशूराणांसहस्रेणतुरंगमं राज्ञेसदसिचानीयददर्शहरिसुत्तमम् ११ पूजितंचर्चितंरम्यंमुक्ताफलविभूषितम् सिंहासनेचोपविष्टोरत्नकांचननिर्मिते १२ सभातस्यविचित्रैवरत्नचित्राहिरण्मयी अयुतस्तंभसंयुक्तानानाभावप्रदर्शका १३ हंसाश्चैवमयूराश्चशुकाः पारावतास्तथा सारिकाः कोकिलाः केकारत्नकांचननिर्मिताः स



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

जीवाइवलक्ष्यंतेराज्ञः सदसि शोभनाः रत्नप्रदीपाः शतशोयत्र कांचनदीपकाः १५ गंधतैलावसिक्ताश्च कर्पूरपुलकैस्तथा प्रदीपितासभाभातिदीपैर्नानाविधैर्नृप १६ नृपभूषणकांत्याच शस्त्राणामपिभारत कर्पूराणामपिकणैः पतितैर्भूमिकंबलाः १७ अरुणासितवर्णास्ते दृश्यंते जनमेजय धूपवासेन पुष्पाणां गंधेनागरुणासह १८ कस्तूरीनिकरैस्तोयैर्गंधराजैः सकेसरैः मूर्च्छयंती सभालोकानुप विषान्नृपांतिके १९ चित्रांगदासुतोवीक्ष्य तुरंगं पत्रवाचकाम् युधिष्ठिरस्यतंज्ञात्वाहयंपार्थेनपालितम् २० सबुद्धिंपरिपप्रच्छ मंत्रिणंमंत्रिसत्तमम् जननीमेपार्थपत्नी नृत्यंतीपितृसद्मनि २१ तालहीनानदाजाता शप्तापित्रामहात्मना नक्राभूता चिरंतिष्ठजलेविगततालिके २२ यदार्जुनस्यचरणौप्राप्स्यसेदैवयोगतः सत्वांमोचयितात्वंभविष्यतिनसंशयः २३ तथाजातंपुरापार्थात्संजातोऽहमरेशभो जननीमेपरित्यज्यगतासातंयुधिष्ठिरम् २४ मयाराज्यंमहत्प्राप्तं पुत्रोहंपांडवस्यहि किंकरोमिसबुद्धेत्व मयाकार्यंविनाशितंस्वपितुस्तुरगश्चायं समानीतोऽविचारतः २५ सुबुद्धिरुवाच

एवमेतन्नसंदेहः प्रथमंनविचारितम् त्वयैवपालनीयोयंवर्षमात्रंतुरंगमः २६ स्वपितुः शासनंकार्यंहतव्याहृयद्धारिणः पुत्राणांपरमोधर्मः क्रियतेपितृपूजनम् २७ अधुनाविविधंवित्तंराज्यंचनृपसत्तम समर्पयार्जुनायाथ प्रसादयनिजंगुरुम् २८ ब्राह्मणैः संयुताः सर्वेनरनारीसमावृताः कुमारीणांगणाः पुष्पगजारूढाव्रजंतुतम् २९ नृत्यंत्योयांतुनर्तक्यः प्रगायंतश्चगायकाः वयंसर्वेसैनिकास्तेनागरास्तेमहाजनाः ३० संभावयितांजनकंतावकंहरिसेवकम् प्रयच्छामोहयंशीघ्रमेवंमंत्रः सुखोदयः ३१ जैमिनिरुवाच श्रुत्वासबुद्धेर्वचनंराजासौबभ्रुवाहनः प्रययौसबलःशीघ्रंगृहीत्वाथतुरंगमम् ३२ ब्राह्मणैः सहितोवीरैर्नागरैश्चमहाजनैः चंदनानिचकस्तूरीकर्पूरनिकरान्बहून् ३३ वाहितैः शकटैः सार्कंतथान्यैरत्नपूरितैः गजैर्मत्तैश्चदुर्गोरैरथैःकनकचित्रितैः ३४ श्यामकर्णैश्चतुरंगैर्वेष्टितःपांडवंमुदा वादित्राणांचनादेन जयशब्दैःसुमंगलैः ३५ गजा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



रूढकुमारीणां करमुक्तैः सुमौक्तिकैः अग्रतो धूपधूमैश्च लाजैर्दूर्वादलैर्वृतः ३६ यत्र व्यूहं निजं सैन्यं स्थितो वानरकेतनः प्रद्युम्नपुरतः कृत्वा यौवनाश्वस्य पुत्रकम् ३७ अनुशाल्वं महावीरं नीलकेतुं स धार्मिकं हंसध्वजं महाराजं शैनेयं च महाबलम् ३८ हार्दिक्यं यादवाध्यक्षं तथान्यान्यादवान्विभुः गजादुत्तीर्य वीरोसौ बलवान्बभ्रुवाहनः ३९ नमन्नमन्नाजगाम पश्यतां सर्वभूभुजाम् पदातिश्चार्जुनस्ततः प्रहृष्टः प्रत्ययात्स्वयम् ४० संस्थाप्य वस्तुजातं तद्यदानीतं तदग्रतः मुक्ताकेशान्क्षालनार्थं पादयोः पाण्डवस्य हि ४१ विरजस्कौ कृतौ पादौ स्वकेशैः परितोषितः ववर्षुः कन्यकाः सर्वाः पुष्पमुक्ताफलानि च ४२ सबलः सपपातोर्व्यां दण्डवद्बभ्रुवाहनः अर्जुनस्यान्तिके राजन् साश्रुकण्ठो महामतिः ४३ पार्थस्यांघ्रिंसमासाद्य पुनरेवोत्थितोऽब्रवीत् बभ्रुवाहन उवाच तवाहं पुत्रकस्तात उलूप्या परिवर्द्धितः ४४ चित्राङ्गदाप्रसूतं मां त्वत्तस्तीर्थकरात्पुरा बभ्रुवाहननामाहं न जाने तुरगं तव ४५ गृहाण राज्यं निखिलं शाधि मां त्वं धनंजय पुनरेवार्जुनपुरो निपपात विशांपते ४६ क्षमस्वेति वदन्वाग्मी सभृत्यो बलसंयुतः तं तथा भाषमाणं ते निरीक्ष्यार्जुनसैनिकाः ४७ प्रद्युम्नप्रमुखाः प्रोचुः पार्थं प्रति महीपते पुत्रं कथं न गृह्णासि ब्रुवन्तं परमं हितम् ४८ मानीं च पतितो भूमौ तमुत्थापय पाण्डव पश्य श्रियं च महतीं स्वपुत्रस्यातितेजसः ४९ जैमिनिरुवाच तेषां भाषितमाकर्ण्य पार्थः क्रोधसमन्वितः भाविनाच विनाशेन निर्गीर्णो वाक्यमब्रवीत् ५० अर्जुन उवाच पदा तं ताडयित्वाथ बभ्रुवाहनमौरसम् मस्तके भर्त्सयन्कोपात् कालकल्पं स दारुणम् ५१ न त्वं ममौरसः पुत्रो भयग्रस्तकलेवरः चित्राङ्गदाप्रसूतात्वां वैश्यादन्यं न पाण्डवात् ५२ प्रथमं विधृतः कस्मात्तुरगो मे स्वपौरुषात् भयेन वैश्यवत्त्वं तु तुरगं दातुमिच्छसि ५३ न मया जनितश्चान्यस्त्वादृशः क्लीबपौरुषः सुतः सञ्जनितोयस्तु महाबुद्धिपराक्रमः ५४ कृष्णाप्रियो धर्मपरो मम चापि प्रियो रतः सुभद्रानन्दनः पुत्रो ममैकः क्षत्रियात्कृत ५५ येन द्रोणमुखा वीराः संग्रामे विमुखाः कृताः चक्रव्यूहं विनिर्भिद्य रक्षितो धर्मनन्द



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

नः ५६ क्वजंबूकः क्वपंचास्यः क्वखंजः क्वचशीघ्रगः त्वंजंबूकःकुतःसिंहःसुभद्रानंदनोमम ५७ मू
टसैन्यंनपतितंतावकंमच्छरैः क्षितौ नबाणाहृदितेलग्नाःकथंभीतोऽसिदुर्मते ५८ गंधर्वराजदु
हिताजननीतवनर्तकी त्वंनटोभवगच्छाद्यराज्यंत्यक्त्वागृहेधनुः ५९ त्यजैतद्विपुलंरम्यंरथंत्वंकु
लपांसन क्षत्रधर्मेणतेहीनंजीवितंनसुखप्रदम् ६० उच्चैर्वंशंगृहाणत्वंबध्वाकटतुमर्दलम् वा
लेयंपृष्ठतोबध्वारंगेनृत्यंप्रवर्तय ६१ जैमिनिरुवाच ततःसबुबुधेसर्वंयत्तेनाभा
षितंतदा प्रत्युवाचहसन्वाग्मीसकोपस्तत्रपांडवम् ६२ बभ्रुवाहनउवाच सर्वंते
क्षामितंपार्थनत्वेकंक्षामयेपुनः वेश्याज्जातंमन्यसेमांजननीमेप्रदूषिता ६३ त्वयाल्पबुद्धिनालोके
समक्षंमेऽद्यसंगरे क्षत्रियत्वंदर्शयामितवाग्रेतुधनंजय ६४ गच्छंतुकन्यकाःसर्वाःपुरमध्येमहा
जनाः सैनिकाश्चात्रतिष्ठंतुहयोयंचनिबध्यताम् ६५ कथंमोचयितापार्थोभविष्यतितुरंगमम् म
याधृतःपौरुषेणव्यूह्यसेनांहिभास्कराम् ६६ सुबुद्धिप्रमुखावीरायत्ताःसंतुरणेमम सर्वेतेनादृशं
चक्रुर्गृहीत्वातुरगंस्थिताः ६७ महत्सैन्यंस्थितंघोरंसशब्दंकालरूपधृक् चामरापीडसंयुक्तंरुद्रा
क्षवलयंपृथु ६८ नवरत्नसुवर्णेनभूषितंचारुकुंडलम् नानावादित्रशंखानांनादेनैवविनोदित
म् ६९ गजानामर्बुदंनद्धघंटाकंबलधारिणाम् रथानामपिराजेंद्रस्थापितंकोटिसप्तकम् ७० हया
नामपिरूढानामर्बुदद्वितयंतथा पदातीनांसुपुष्टानांत्रितयंचार्बुदस्यहि ७१ महावीराःसदापुष्टाश्च
युद्धेःकुशलारणे अन्योन्यस्यहितेयुक्ताःकालेसत्यव्रताःस्थिताः ७२ चित्रांगदात्मजेनैतेयोजितास्त
त्क्षणान्नृप तैस्तदावेष्टितंसैन्यंपांडवस्यमहात्मनः ७३ नानाशस्त्रप्रहरणैर्मोहिभावैर्यथाजगत्
क्ष्वेडाकिलकिलाशब्दैःसिंहनादैश्चतर्जनैः ७४ तिष्ठतिष्ठेतिभाषद्भिःपातयद्भिःपरान्रणे ततोर
थंसमारुह्यदिव्यंकनकचित्रितम् ७५ त्रिभूमिकंसुशस्त्राढ्यंमुक्तामालाविभूषितम् प्रलंबचाम
रधरंमयूराश्वपताकिनम् ७६ किंकिणीशतसंपूर्णशक्रस्यंदनहासकम् उवाचकार्ष्णिःपितरंतिष्ठ

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



तिपुरुषं रणे ७७ बभ्रुवाहन उवाच गृहाणार्जुन कोदंडं पौरुषं पश्य मामकम् । पितृभावे
न चानीतो मया यं तुरगस्तव ७८ पुनः समर्पितस्तुभ्यं सर्वराज्यं निवेदितम् शरणं चागतोऽहं त्वां तन्मान्यं
नाभवत्तव ७९ संग्राम एव त्वं त्वन्मान्यस्तव पार्थ न संधिता सन्नद्धं विद्धि मां रौद्रं कस्त्वां त्राता द्य विद्यते ८०
जैमिनिरुवाच एवं वदंतं समरे बभ्रुवाहनमातुरम् समाह्वयंत पार्थं हि युद्धार्थं दैत्यनायकः
८१ अनुशाल्वो रथारूढस्तमियाय सरोषितः शरैः स्वर्णपुंखैर्नवभिस्तं विव्याध हसन्निव ८२ कार्ष्णिः श
तेन बाणानामनुशाल्वं समाकिरत् दैत्याधिपस्तान्नाराचान्मध्ये चिच्छेद सत्वरः ८३ छिन्नान् शरान्वी
क्ष्य रोषान्मुमोचान्यान् शिलाशितान् कोटिशः शुकपत्रान्स रणे दैत्याधिपं प्रति ८४ उभौ शरविभिन्नांगौ
रुधिरेण परिप्लुतौ व्यराजेतां महाराज पुष्पितौ किंशुकाविव ८५ प्रवृषा मासतुर्बाणैर्गगनं गतदैवतम्
जलदाविव तौ योधैः परस्परवधैषिणौ ८६ अनुशाल्वस्य तुरगान्बाणैर्निन्ये यमक्षयम् चतुर्भिः पंचमेना
पि सारथिं च हसन्निव ८७ रथं चिच्छेद षष्ठेन तिलशः प्रहसन्निव सप्तमेन ध्वजश्छिन्नो धनुश्चैवाष्टमेन तु
८८ सुवर्णपुंखैर्दशभिर्दैत्यराजं समाकिरत् अन्यं रथं समारुह्य गृहीत्वान्यन्महद्धनुः ८९ अनुशाल्वोपि
विरथं चकारार्जुनपुत्रकम् शरीरं बाणसाहस्रैर्भिन्नं तस्य स्वतेजसः ९० स पुनः कार्ष्णिना राजन् विरथ
स्तत्क्षणात्कृतः दैत्याधिपो गदां घोरां प्राहिणोद्बभ्रुवाहने ९१ गदाप्रहाराभिहतो मणिपूरपुराधिपः
अनुशाल्वैः शरैर्घोरैर्नवभिः समताडयत् ९२ तैः शरैरर्दितो राजा मूर्च्छितो निपपात सः तं विसं
ज्ञं समीक्ष्याथ प्रद्युम्नो योद्धुमाययौ ९३ तिष्ठ तिष्ठेति च वदन् बभ्रुवाहनमाह्वयत् प्रहरंस्तरसा बाणै
स्तर्जयन्परुषोक्तिभिः ९४ सुवर्णपुंखैर्दशभिः पुनर्विव्याध पांडविम् बभ्रुवाहस्ततः क्रुद्धो बा
णानामयुतेन तम् ९५ प्रद्युम्नमपि संग्रामे ऽनंगं चक्रे यथोचितम् पूर्वजन्मन्यनंगोऽभू-
दस्मिन्नपि तयाऽभवत् ९६ चिंतयथा सुनाविद्धः कार्याकार्येषु मूढधीः नगोत्रजां नात्र सु
तां नारी प्राप्य विसुंचति ९७ संगरे पीडितस्तत्र कार्ष्णिः स नृपसत्तम प्रद्युम्नः शरसंपर्कात्कर्तव्यं नान्व





CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

विंदत ९८ बभ्रुवाहोऽस्मस्यापि सेनानांचतुरंगिणीम् भस्मयबाणबहुभिः सर्वकार्यविशारदः ९९ तंवीक्ष्य कृष्णतनयःपुनर्विव्याधसायकैः बभ्रुवाहचसबलंसर्वेतेमोहितारणे १०० मातंगामदसंयुक्ताःकामबाणप्रपीडिताः पतितांविस्मयःकोनभ्रममाणारणांगणे १ विकीर्णकंबलास्तत्रभिन्नकुंभाविचेतसः यक्षांगनाश्चकुर्वंतिसहारंयौवनंनिजम् २ गजकुंभस्थितैःसांद्रैरम्यंमुक्ताफलैर्मृधे नरशीर्षमदहीनं कृत्वारुधिरपूरितम् ३ अन्योन्यंतेनशिरसाताडयंतिहसंतिच गजशीर्षचरुधिरंप्रक्षिपंतिपरस्परं ४ गजदंतैश्चतुःषष्टियोगिन्यश्चारुविभ्रमम् नृत्यंत्योगायनंचक्रुस्तदद्भुतमिवाभवत् ५ शृंकागायत्रवेतालाःकुर्वंतिस्वांतनुंरणे पुष्टांमांसैश्चमेदोभिःप्रलिपंतितथाबहिः ६ गजमस्तकमादाय भैरवाहयमस्तकम् नरस्यापिरवरस्यापिकरभस्यमहच्छिरः ७ नृत्यन्गोलकवद्युद्धेप्रक्षिपत्यूर्ध्वमूर्ध्वतः कंकालाभैरवायक्षाःपिशाचारुधिरंपपुः ८ गजांत्ररज्जुभिर्नृत्यंचक्रिरेध्वनिनोमृधे वेतालाश्चपिशाचाश्चसमृदंगामुदान्विताः ९ नरशीर्षमथाबद्धचरणेक्षुद्रघंटिकाम् नृत्यंतिरवलगायंतितस्मिन्वीरसमागमे १० कृतपानाःस्मदृश्यंतेकोटिशःशब्दवादकाः शुंडान्गजस्यत्रुटितान्गृहीत्वामुखवायुना ११ पिशाचाःपूरयंतिस्मकाहलांनृपसत्तम गजकर्णौगृहीत्वैकोझर्झरीवादयन्ययौ १२ आददेकरभग्रीवांमुक्तमांसांहिजंबुकैः नरांत्रतंतीवीणांचतामवादयतिस्मसः १३ ग्रीवापादविहीनानिगजांगानिचवाजिनाम् भग्नानिमेदोनद्धानिवादयंतिमृदंगवत् १४ ब्रह्मग्रहास्तत्र राजन्प्रक्कन्नेकिलयुद्ध्यति शिरांसितत्रवीराणांछिन्नान्यादायकौतुकात् १५ स्वक्रीडाकंदुकांश्च कुर्भैरवाःस्वगणैस्तदा यत्रयत्रहतंसैन्यंकृष्णापुत्रेणमारिष १६ शोणितौघानदीतत्रकेशशैवालशाड्वला निमग्नास्तत्रमातंगानदृश्यंतेकुतोनराः १७ यथावैतरणीघोराद्दितीयेषाप्रवर्तिता ११८

इत्याश्वमेधिकेपर्वणिजैमिनीयेप्रद्युम्नयुद्धवर्णनंनामत्रयोविंशतितमोऽध्यायः २३ जैमिनिरुवाच नदींतीरस्थापदाश्चकर्षतःकुणपानिह आंत्राणिपतितान्याशुभक्षयंतोवका

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



शिरे १ मांसकर्दमजंदुर्गंनृकपालोपलंतटे कृत्वाचभैरवास्तत्रनचक्रिरेकलहंमुदा २ प्राकारस्थाःसादृहा-
संशिरोभिर्गजवाजिनाम् गजमेदोद्भवांरौद्रांमांत्रसूत्रपतंगिकाम् ३ कालखंडकलांगूलांकंकोलांगय-
नेक्षिपन् एतच्चान्यत्तदाचक्रुःप्रद्युम्नस्यरणेनृप ४ पुनःप्रद्युम्नवीरोसौपीडयन्वाहिनींबलात् च-
कारकदनंघोरंपदातीनांनृपोत्तम ५ यथाप्रलयकालेचभूतानांशशिशेखरः निहतास्तेनमातंगा
मदमत्ताःसहस्रशः ६ रथाश्चरथिभिःसार्कंचूर्णितारथमूर्द्धनि हयाश्चसहयारोहाःप्रद्युम्नेनबलीय-
सा ७ पातिताभूतलेराजन्बाणैःशतसहस्रशः पौरुषंदर्शयामासबभ्रुवाहनसैनिकान् ८ तथातं
वीक्ष्यकुपितंबभ्रुवाहोमहाबलः शरैःसंछाद्यतुरगान्सारथिंचझषध्वजम् ९ मूर्च्छितंतरसाभूमौपा-
तयामासकोपितः रथानांविंशतिस्तस्यप्रद्युम्नस्यमहात्मनः १० नाशेनाशेस्वीकृतानांछिन्नापार्था-
त्मजेनहि तथैवकृष्णपुत्रेणप्रद्युम्नेनमहारणे ११ चूर्णीकृताहिबहवोरथास्तस्यबलीयसा अपातय
द्रणेकार्ष्णिर्मूर्च्छितंतस्यसारथिम् १२ उत्थायभूमौकुपितःकृष्णपुत्रोथरोषतः तथाप्रद्युम्नमपिच
निष्पिपेषार्जुनात्मजः १३ प्रहारैःकश्मलंतैस्तुरुक्मिणीनंदनोययौ उत्थितःपुनरेवासौगदांजग्राहदा-
रुणाम् १४ मुमोचास्मैकृष्णपुत्रश्चिच्छेदेनांत्रिभिःशरैः बभ्रुवाहश्चतरसापंचभिस्तमपीडयत् १५
रुक्मिणीतनयेनापिबहुधाताडितःशरैः उभौशस्त्रास्त्रकुशलौशूरौपरमधन्विनौ १६ उभौगगनगौ
राजन्नुभौभूतलचारिणौ तौचक्रतुस्तदाबाणपूर्णंगगनमंडलम् १७ भूतलंचापिराजेंद्रयुद्धेवैलोमह-
र्षणे परस्परस्यसंघातान्मयूखान्भास्करानपि चक्रतुस्तौतदाबाणैर्यथामोहोहरेःस्थितः १८
जैमिनिरुवाच भिन्नाःसायकवर्षेणभूभृतःकटकैःसह पर्वताइवराजंतेधातुरागप्रवाहिनः १९
छिन्नशीर्षामानहीनागतश्रीकागतासवः शिरांसिपतितान्येवगृहीत्वामहदायुधम् २० कबंधाःशत-
साहस्रास्तस्मिन्युद्धेसमुत्थिताः तरुणीकरजैर्भिन्नावीरास्तेरतिसंगरे २१ यथाव्यथांनजानंति
तथायुद्धेशरव्यथाम् केचित्खड्गकरावीराःपतिताधरणीतले २२ करपत्रधराःकेचिद्गदाहस्ता



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

स्तथापरे त्रिशूलधारिणश्चान्येसमरेशक्तिसंयुताः २३ भृशुंडीपाशपरिघकुद्दालवरधारिणः
भिंडिपालायुधाश्चैवमुशलैश्चापियोधिनः २४ सपट्टिशायष्टिधरास्तथैवांकुशयोधिनः कुंतायुध-
धराः केचित्कुठारपरशूधराः २५ सशस्त्रायेचसंप्राप्ताहताःपार्थसुतेनते वरान्गजान्शरैर्यरैः सा
रोहान्सांकुशान्रणे २६ सघंटान्विदलीकृत्यननादार्जुननंदनः तस्यबाणोरथंभित्वाहयंभित्वा
तथागजम् २७ पदातिनंसकवचंयातिदूरेनतिष्ठति यत्रयत्रतृणंभूरितत्रवन्हिःप्रसर्पति २८ वने
प्रज्वलितेयद्वत्तद्वद्बाणःसगच्छति एवमेकेनतत्सैन्यंव्याप्तंपार्थस्यधीमता २९ अनुशाल्वःपुनर्वी
रंनदन्योद्धुमुपाययौ प्रद्युम्नोनीलकेतुश्चयौवनाश्वःसपुत्रकः ३० हंसध्वजःपुत्रयुतोमेघवर्णोबला-
धिकः एतेसर्वेतमेकंहिनाभवन्योधितुंक्षमाः ३१ पंचभिःपंचभिर्बाणैस्तान्सर्वान्गतचेतनान् वि
रथान्गजहीनांश्चगताश्वान्छत्रवर्जितान् ३२ महाबलान्कीर्णकेशान्भूषणैःपरिमोचितान् चकारसम
रेकार्ष्णिःशुष्कास्यान्गतचामरान् ३३ रुधिरंस्वंपिबंतश्चसोमपानमिवाध्वरे भ्रमंतश्चश्वसंतश्चधा
वंतश्चरणांगणे ३४ पलायंतश्चभिन्नास्तेशरैःकनकचित्रितैः कश्चित्प्रविष्टोनागस्यगतांत्रस्यकलेवर
म् ३५ स्फुरंस्समन्यतेयावत्तावत्प्रासोमहावृकैः गजदेहात्समाकृष्यचक्रतुर्नेत्रवर्जितम् ३६ विभिद्यहृ
दयंतस्यवृकोमांसंप्रजक्षतुः तथापरःशत्रुहतःशिवाभिःपरिनीयते ३७ सरागंहृदयंतस्यघनकुंकु
मचर्चितम् शिवानखैःपरिच्छिन्नंददर्शाशुविचामरः ३८ तमारोप्यविमानेस्वपतिंचक्रेसुरांगना प्र
त्युवाचहसंतीचशिवानाथकलेवरम् ३९ पश्यभूमौदारयंतितावकंरणमंडले मयाद्युनापीड्यतेतेस्त
नाभ्यांकरुणानमे ४० तथैवान्योविशालाक्ष्यारात्रौदष्टाधरोदिवा स्तैनैवचरणेकोपात्पुनर्नाकेसुर
स्त्रिया ४१ व्यर्थांत्रिवारंसंप्राप्यहृष्टस्तत्कौतुकंमहत् गजदेहेप्रलंबंतबाणभिन्नंकलेवरम् ४२
एकंरथोद्वितीयंतुपश्यत्यन्योपिसंस्थितः दोलयान्दोलितंनाकेदिव्यस्त्रीभिरलंकृतम् ४३ सुपेश
लस्वर्गरामाबाहुपाशेनयंत्रितः कश्चिद्रणगतान्पाशान्दारुणान्स्मरतिस्महि ४४ इतरस्तत्रसंग्रामे

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





पतितेस्वेकलेवरे ददर्शवृष्टिंमहतींपततींगजपुष्करात् ४५ विमानेपिप्रियावल्कमदगंडपलांघनाम् एवं
तेनतदायुद्धंकृतमर्जुनसूनुना ४६ सैन्यंप्रहतमप्रांतंभग्नंचपरिपालितम् चतुर्विधंसैन्यमसौजग्राह
स्वमिवाहवे ४७ बाणैर्विमोहितान्वीरान्स्वपुरेहर्षितोनयत् नीयंतेगजशालासुगजाःपार्थस्यवाजिनः
४८ मंदुरासुचपार्थस्यपुत्रेणचबलीयसा रथास्तुवस्तुजातंतत्पुरमध्येगतंनृप ४९ प्रद्युम्नप्रमुखावीरामो
हिताःशरवृष्टिभिः ५० इत्याश्वमेधिकेपर्वणिजैमिनीयेबभ्रुवाहनयुद्धवर्णनंनामचतुर्विंशो
ध्यायः २४ जैमिनिरुवाच संग्रामस्त्वभवद्राजन्बभ्रुवाहनपार्थयोः यथाकुशस्यराम
स्यवाजिमेधहयेधृते १ जनमेजयउवाच कथंरामःकुशांपुत्रंशमयच्छरवृष्टिभिः कथं
चतेनपुत्रेणजितोरामोरणाजिरे २ रामोनवेत्तित्वंसूनुमेतन्मेविस्तराद्वद यस्माद्रामकथाविप्रसर्व-
पातकनाशिनी ३ जैमिनिरुवाच शृणुराजन्महाबाहोरामस्यचरितंमहत् वि-
स्तरेणयथापूर्वंवदतोमेनिशामय ४ रामस्तंरावणंहत्वाकुंभकर्णंमहाबलम् तथान्यान्राक्षसान्घोरा
न्मेघनादमुखान्रणे ५ सीतामग्निमुखाच्छुद्धामादायस्वपुरंययौ विभीषणेनवीरेणलक्ष्मणेनमहात्म
ना ६ तथाहनूमत्प्रमुखैर्वानरैःपरिवारितः अयोध्यांप्रविवेशाथवसिष्ठप्रमुखाद्विजाः ७ पठंतोमंग-
लंसूक्तंरामसंमुखमाययुः वसिष्ठप्रमुखान्दृष्ट्वाततोदाशरथीरथात् ८ अवातरत्क्षणाद्रामोनमश्चक्रे
चतान्मुनीन् पश्चाच्चलक्ष्मणःसीतानमस्कारंप्रचक्रतुः ९ ततःसतैर्नियुक्तोसौरामोराजीवलोचनः
कैकयींचसुमित्रांचभरतंलक्ष्मणंतथा १० शत्रुघ्नंचपुरस्कृत्यववंदेरघुवंशजः कौसल्याजननीपश्चा
न्नमस्कर्तुमगाच्चसः ११ मलिनांपंकदिग्धांगींरामदर्शनलालसाम् भर्तृदुःखपरिक्लिन्नांहर्षि-
तांरामदर्शनात् १२ दृष्ट्वापद्मपलाशाक्षींरामंहर्षसमन्विता परिरभ्यचिरंतस्थौधनंप्राप्याध
नोयथा १३ स्नापयंतीदृगंभोभिःस्नेहेनबहुधासुतम् विशेषेणजटावृतंचिरंस्नानमवर्तयत् १४ त
तोरामंकराग्रेणपस्पर्शजननीतथा राक्षसास्त्रक्षतंदृष्ट्वाप्रोवाचवचनंशुभम् १५ वसिष्ठप्रमु-



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

रवाराममंवदंतिकिमिदंवचः अच्छेद्योयमभेद्योयमक्लेद्योयंस्कृतस्तव १६ तदिदानींवृथामन्येबाणैर्भिन्नो
सिराघव अथवाशिवभक्तंत्वामाहुःकेचिन्मुनीश्वराः १७ तस्माद्वत्तंत्वयास्थानंबाणानामितिमेमतिः
स्पृष्टस्तदंगंकौसल्यास्वपाणिभ्यांदयावती १८ आनंदंपरमंप्राप्ताज्ञानंलब्ध्वेवब्राह्मणः तत्करस्पर्शनो
रामोमुक्तोदुःखैःसुदारुणैः १९ ततोरामोमहाबाहुर्जननींशिरसानताम् नमस्कृत्यततोबंधून्पप्रच्छकु
शलंचतान् २० हर्षितोभ्रातृभिःसर्वैरयोध्यायासुवाससः पालयन्पृथिवींसर्वांसशैलवनकानना
म् २१ प्रजाःस्वस्थाह्यवर्ततविप्रावेदपरायणाः आतृप्तेश्चपयःपीत्वावत्सायत्रोपरेमिरे २२ गोपाला
दुदुहुस्तत्रघटोघ्नीर्गाःशुभास्तदा फलंतिसततंवृक्षालताःपुष्प्यंतिसर्वदा २३ औषध्यःफलवंत्यस्तादु
ष्कालादेर्विनाशकाः सरयूतीरमासाद्ययज्ञान्कुर्वंतियाजकाः २४ यूपस्तंभाःसमंताच्चपशुभिरुपशो
भिताः दृश्यंतेस्थाणुताप्राप्ताअध्वरांतेसमुच्छ्रिताः २५ जैमिनिरुवाच एवंसरामः
सुखितःपृथिव्यांत्रिभिश्चतैर्भ्रातृभिरग्निकल्पैः रराजराजीवपलाशनेत्रोगुणैस्त्रिभिःसत्वरजस्त
मोभिः २६ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेअयोध्याप्रवेशोनामपंचवि
शतितमोऽध्यायः २५ जैमिनिरुवाच नववर्षसहस्राणिराज्यंचक्रेसराघवः प्रजांन
लेभेसीतायांपालयन्पूर्वजस्थितिम् १ ततःकालेनमहताग्भमाधत्तमारिष नक्षत्रेवैष्णवेतुर्येपादेन
देवताभिधे २ चरेलग्नेप्रहृत्तेचमातृदेशांतरप्रदे ततःसप्ततुरोमासान्रेमेपत्न्यासहेश्वरः ३ प्राप्ते
तुपंचमेमासेरामःस्वप्नेददर्शसः सीतांभागीरथीतीरेविलपंतीमनाथवत् ४ लक्ष्मणेनपरित्यक्ता
मित्यहोविस्मयान्वितः प्रातःकृताह्निकोरामोवसिष्ठमिदमब्रवीत् ५ रामउवाच स्वप्ने
पश्यामिरुदतींसीतांभागीरथीतटे तद्गर्भविघ्नशांत्यर्थंतस्याःपुंसवनक्रिया ६ शीघ्रमादिश्यतांब्र-
ह्मन्नुपन्नक्षत्रेदिनेशुभे तस्यतद्वचनंश्रुत्वावसिष्ठोमुनिपुंगवः ७ वसिष्ठउवाच कर्त
व्याशुक्लपक्षेतुदक्षपक्षोव्यपोह्यतु पुष्यार्कयोगेपंचम्यांकार्यंपुंसवनंविभो ८ मुहूर्तंस्यदिनंया

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





वदागमिष्यतिराघव तावद्रामममहाबाहोक्रियतांविप्रतर्पणम् ९ मुनेस्तद्वचनंश्रुत्वारामोलक्ष्मणमब्र
वीत् सीतापुंसवनंभ्रातःपंचम्यांचभविष्यति १० तावत्त्वंगच्छभद्रंतेजनकंचसमानय विश्वामित्रं
मुनिश्रेष्ठंमुनिभिःपरिवारितम् ११ लक्ष्मणोऽपिनमस्कृत्यरामस्यांतरतोययौ ततोरामोमहाबाहुःशि
ल्पिभिर्मंडपंशुभम् १२ अकारयत्त्रिगव्यूतिमितमायामतःसमम् तस्मिन्वसिष्ठोरुचिरंस्थंडिलंसमक
ल्पयत् १३ उदुंबरफलानांचस्रजंतत्रचकारसः शालंत्रिषुशुभ्रंचतथावैसूत्रवेष्टनम् १४ पीठमौ
दुंबरंतत्रचतुरस्रंचवल्लकीम् समकल्पयदेतानिक्रियांगानिमुनीश्वरः १५ तावत्सलक्ष्मणस्तूर्णंवि
श्वामित्रंमहामुनिम् जनकंचसमाहूयरामंनत्वेदमब्रवीत् १६ लक्ष्मणउवाच आगतौ
जनकौरामविश्वामित्रोमहातपाः अर्घ्यादिक्रिययाभ्रातःपूजयैतौसमागतौ १७ रामस्तद्वचनंश्रुत्वा
विश्वामित्रंनरेश्वरम् नमस्काराद्यर्घ्यदानेनपूजयामासतौतदा १८ ततःप्राप्तेमुहूर्तेचवसिष्ठोव्याहर
द्वचः रामत्वंसीतयासार्द्धंकुरुस्नानादिकाःक्रियाः १९ मंडपंचसमायाहिमातृभ्रातृसमावृतः अथ
दाशरथीरामःकृतस्नातःसीतयासह २० आगतोमंडपंरम्यंब्राह्मणैःसमलंकृतम् वेदविद्भिःसदाचा
रैःस्मृतिज्ञैःकर्मकोविदैः २१ ततोवसिष्ठोरामंतांचतुष्केसन्यवेशयत् चरुपूर्वमथोहोमंतिलाज्याहुति
भिःक्रमात् २२ चक्रेब्रह्मात्मजःसर्वंसलिलेनाभिषिंचनम् सीतायामूर्द्धजेष्वेवंसूत्रवेष्टंसमाक्षिपन् २३
किंशुकबीजकृतांमालांयज्ञांगफलसंभवाम् वसिष्ठेनसमाक्षिप्तांबिभ्रतीजानकीतदा २४ ब्रह्मगोल
कसंघातंबिभ्रतीविरराजते वीणाप्रवीणोभरतोवादयन्जानकींप्रति २५ सुशिक्षापयिष्युर्गीतंगर्भ
स्यैवबभौविभुः एवंकृतस्वस्त्ययनोरघूद्वहोमुनीश्वरान्पायसशर्कराज्यैः संतर्प्यवस्त्राणिसुवर्णभू
षणंददौरथान्गजगणान्द्विजेभ्यः २६ जैमिनिरुवाच जनकेनापिरामायदत्तं
राज्यमकंटकम् विश्वामित्रपुरस्कृत्यवनवासंततोययौ २७ अयोध्यायांदाशरथिःशयानःकि
लसीतया एकदारात्रिसमयेहृष्टःसीतांवचोब्रवीत् २८ रामउवाच दोहदः-



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

कीदृशोभद्रेकस्मिन्वस्तुनितद्वद सीतातद्वचनंश्रुत्वाभर्तारमिदमब्रवीत् २९ सीतोवाच
तवप्रसादान्मेकामः परिपूर्णःसदाऽनघ परंभागीरथीतीरेरंतुमिच्छामिराघव ३० ऋषिपत्न्यश्चयत्रा
सन्नृषयोऽजिनवाससः जहासरामःकिमिदंनतृप्तावनवासतः ३१ सीतेत्वंदंडकारण्येवर्षाणिन
वपञ्चच अद्यवादोहृदस्तेऽयंप्रथमोनिष्फलःकथम् ३२ प्रातर्भागीरथीतीरेगमनंतेऽस्तुजानकी
इतितस्यैप्रतिश्रुत्यसुष्वापसस्फरवंप्रभुः ३३ निशीथेतुव्यतिक्रांतेचाराःपुरचरानिशि राममेरहःसमा
गम्यवाक्यमूचुःपृथक्पृथक् ३४ तवकीर्तिःप्रतापश्चसर्वतोवर्ण्यतेजनैः रामःपृच्छत्यतिहृदंयशा
सांकीदृशीस्थितिः ३५ ममवाममभार्यायाभ्रातॄणादुष्कृतंकिल स्फुटंतवालयाचारश्रमतानिशि
यत्कृतम् ३६ तत्सत्यंवदचारत्वंमाभीतिंकुरुदंडतः चारोऽपिरघुनाथंतंप्रत्युवाचहसन्निव ३७
चारउवाच रामत्वद्दर्शनादेवदुष्कृतंभस्मसाद्भवेत् तवापिदुष्कृतंमन्येविपरीतंरघूद्वह ३८
वयंस्थानानिपापीनिभ्रमामोरघुनंदन तांदृष्ट्वासर्वपापेभ्योमुच्येमभरताग्रज ३९ तथापिलोको
दुर्वारःकिंचिद्दुष्टंवदत्यसौ निशार्द्धेभ्रमताराजन्दृष्टंचित्रतरंमया ४० कस्यचिद्रजकस्यास्यांपुर्यांभा
र्यात्यगाद्गृहम् पितुर्वेश्मसमासाद्यतस्थौदिनचतुष्टयम् ४१ रजक्याजनकश्चिंतामगमत्किंमया
कृतम् सूत्यागमविरुद्धाहिकन्यायत्पितृवेश्मनि ४२ तस्माद्दुहितरंचैतांनयिष्येभर्तृसन्निधिम्
यथांबरस्थंकलुषंशोधयेहंस्वकैःकरैः ४३ तथास्थितायांकन्यायांगृहेयत्तन्नशोध्यते इत्युक्त्वाभ्रा
तृभिःसर्वैरजकःपरिवेष्टितः ४४ जामातरंसमासाद्यकन्यांतस्मैन्यवेदयत् ततःक्रुद्धोब्रवीद्वाक्यंसृ
क्किणीपरिलेलिहन् ४५ जामाताहंस्तुमुद्यम्यरामोहमितिवोमतिः राक्षसानांगृहेसीतावसंतीमनजहा
रयः ४६ एतावदेवरघुनंदनसोब्रवीत्तद्वाक्यंपुनःपुनरिदंरजकोत्रकोपात् राज्ञःसमर्थपदवीमधितिष्ठ
तातद्रामेणचेत्कृतमहंनतथाकरोमि ४७ इत्थंवचांसिस्मवदत्यवश्यंनान्योजनोवक्तुमलंबभूव ततोमया
वाक्यमिदंविविक्तंसत्यंब्रवीत्येषकुतोहिरामः ४८ गंगानदद्वीपनिरतानृपःस्वधर्मनिष्ठःपितृवाक्य

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





कर्ता जेतादशास्यस्यजगच्छरण्यः सराघवः कैनसमोऽस्तिलोके ४९ आचारेष्वनिषण्णोयंनशुणेष्वनु
निस्पृहः मूढोनवेत्तितंरामंगुणिनंरजकोह्ययम् ५० मनसाचिंतनथित्वैवंरामत्वामहमागमम् दूतंनतु
विसृज्याशु चिंतयामासराघवः ५१ शुद्धापिजानकीवन्हौलोकेस्मिन्परिगर्ह्यते तस्मात्त्यजेयंनोचे-
त्तिचिरंदध्यौसजानकीम् ५२ कथंतांमृगशावाक्षींसीतांपद्मनिभाननाम् त्यजामिश्रोत्रियोमुख्यामा
चारस्यैवपद्धतिम् ५३ अथचेमांपरित्यक्ष्येकलौविभायथाकृतिम् इतिचिंतयतस्तस्यप्रातःकालो
भवत्तदा ५४ जैमिनिरुवाच ततोसौजानकीत्यागेमनःकृत्वारघूद्वहः आह्वयामा
सभरतंशत्रुघ्नंलक्ष्मणंतथा ५५ एतस्मिन्नंतरेप्राप्तोभरतोलक्ष्मणस्तथा शत्रुघ्नश्चमहाबाहुःसेवितुंर
घुनंदनम् ५६ दृष्ट्वाश्रुनेत्रंततोरामंविषण्णंदीनचेतसम् प्रोचुस्तेऽन्योन्यमाशीनंरामशीघ्रंनचागताः
५७ तस्मात्किंकुपितोभ्रातात्वस्मान्दानवर्जितान् किमस्माभिर्द्विजश्रेष्ठाःप्रातर्नैपूजिताइति ५८
नप्रातर्जागृताःकिंवा केवाशीघ्रंनसत्कृताः इत्येतत्संवदंतस्तेभ्रातरोवन्हितेजसः ५९ आयातारघुना
थंतंनमस्कृत्येदमब्रुवन् त्वन्मनस्कान्सदारामत्वत्समर्पितकर्मणः ६० त्वद्दर्शनसमुत्कंठान्किम-
स्मान्नाभिनंदसे रामस्तेषांवचःश्रुत्वासशनैर्वाक्यमब्रवीत् ६१ इत्याश्वमेधिकेपर्वणिजै
मिनीयेकुशलवोपाख्यानेरामवाक्यंनामषड्विंशतितमोध्यायः २६ जैमिनिरुवाच राम
स्तुकथयामासचारेणोक्तंयथानिशि सीतान्वगर्ह्यतलोकेर्ययापाखंडिभिःश्रुतिः १ लोकापवादभीतेनत्य
ज्यतेजानकीमया संसारभयभीतेनयोगिनाममतायथा २ तद्रामवाक्यमाकर्ण्यकंपितास्फूर्जयोयथा
भ्रातरस्तेबयोऽभूवन्रोमांचितवपुर्धराः ३ अब्रवीद्भरतस्तेषांरघुनाथमिदंवचः कृपालुस्त्वंरामचंद्रत्व
य्येवपरिगीयते ४ अंत्यजेभ्योबलात्कश्चित्कपिलांगांसमानयेत् पश्चात्संसर्गदुष्टत्वात्त्यजेत्तां-
विपिनेतुकः ५ जानकींत्वंतथादायराक्षसात्त्यक्तुमिच्छसि सीतातुभ्यंददौशुद्धिमात्मनोग्नि
सुरेषुरा तत्त्वयाविस्मृतंरामकिंवापित्रापुरोदितम् ६ वन्हौप्रदीप्तेज्वालाभिर्लिहंतीभिरिवांबरं सीता



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

यांचप्रविष्टायांतदादशरथोब्रवीत् ७ विमानस्थोंबरेरामत्वांप्रतीहग्वचःशृणु इमांशुद्धांविद्धिपुत्रजानकींभ
र्तृनत्परम् ८ अस्याश्चरित्रेणकुलंनःसर्वविमलीकृतम् येमृताःपुत्रशोकेनतेषांगतिरनुत्तमा ९
जानकीनःस्नुषायेनतेनवासस्त्रिविष्टपे एतद्दशरथेनोक्तंवचनंविस्मृतोभवान् १० ब्रह्मादिभिर्दे
वगणैर्यद्योक्तंतच्चसंस्मर वह्नौविशुद्धावैदेहीफुल्लासत्कलिकायथा ११ गुंफितावानरैर्दृष्टाकपयस्तु-
षिताभवन् तथापितेमनोरामकठिनंपरिलक्ष्यते १२ जैमिनिरुवाच भरतेनेद्
शैर्वाक्यैःप्रोक्तोरामोब्रवीद्वचः सत्यमुक्तंत्वयाभ्रातःशुद्धाजनकनंदिनी १३ लोकापवादोदुर्वारोराज्ञां
कीर्तिविनाशनः कीर्तिहीनंजन्मतेषांजीवंतोपिमृताहिते १४ पुरूरवाहरिश्चंद्रोनहुषोवैन्यएवच व-
रिष्ठान्नृपमुख्यास्तेगीयंतेयशसाभुवि १५ मांधातासगरश्चैवदिलीपोभगीरथः ऋतुपर्णोनलश्चैव
येचान्येपुण्यकीर्तयः १६ ख्यातिंप्राप्ताहिराजानःसत्कीर्त्यैवरघूद्वह नकीर्तिसदृशंकिंचिन्नराणामिहवि
द्यते १७ पापत्राणंपुण्यदंचस्वर्गादिप्राप्तिकारकम् अपकीर्तिस्तुयस्यैवगीयतेमानवैर्भुवि १८ त
स्यजन्मवृथामन्येजीवितंचनिरर्थकम् मुहूर्तमपिजीवेतनरःशुद्धेनकर्मणा १९ युगांतमपिनैवेहन
रःकीर्तिविनाक्वचित् किंनजीवंतिहिचिरंकाकोलूकादिपक्षिणः २० तथातज्जीवितंमन्येनृणांकी
र्तिविवर्जितम् यैःपुत्रैर्बंधुभिर्दारैःपुंसामपयशोभवेत् २१ त्याज्याःपुत्राबांधवाश्चदाराःप्राणप्रियाः
अपि श्रूयतेहिपुराराज्ञाशिबिनासत्यवादिना २२ कीर्त्यर्थंहिस्वदेहस्यदत्तंमांसंहिविष्णवे तथैव
कवचंकर्णोवासवायददौपुरा २३ जीवितंवैनतेयायददौजीमूतवाहनः ददौदधीचिरस्थीनिकीर्त्य
र्थंकीर्तिकृद्दृषिः २४ तस्मादिमांपरित्यक्ष्येजीर्णांत्वचमिवोरगः जीवितेममचेदिच्छातवकैकेयि
नंदन २५ पुनस्त्वयानवक्तव्यंतर्हीदंवचनंमयि तावत्सलक्ष्मणःक्रुद्धोमन्वहस्ताववयाब्रवीत् २६
निधिध्यपाणिनापाणिंनिश्वसन्नुरगोयथा विसृजन्नश्रुनेत्राभ्यांकंबाष्पाविरुद्धस्वजम् २७ ल
क्ष्मणउवाच आःकिंलोकापवादेनत्वंत्याज्यासीतारघूद्वह भार्याकलहतःकश्चिन्मातरंत्यक्तुमर्हति

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



२८ नयात्वंसर्वलोकस्यजननींहातुमिच्छसि पापिनस्तान्हनिष्यामियेसीतांदूषयंतिहि २९ म्लेच्छ
पूज्येरर्दुमुंडैर्यवनैर्दूष्यतेऽऽनिः साकिंत्याज्याहिजवरैरितिरामविचारय ३० शत्रुघ्नःकुपितस्ताव
द्राघवंप्रत्यवोचत शत्रुघ्नउवाच रामत्वंयदिचोन्नूपेत्यक्ष्येप्राणानहंयथा त्वयायेसा
जिताःप्राणास्तेऽमरत्वंप्रपेदिरे ३१ यदित्वंहास्यसिप्राणानमरस्त्वंभविष्यसि अथवात्वामृतंसीताजी
वयेत्पतिलालसा ३२ त्वंचतांमृगशावाक्षींमृतांजीवयसेकथम् शत्रुघ्नस्यवचःश्रुत्वाऽवोचद्रामःशनैः
शनैः ३३ रामउवाच आत्मानमप्यहंजह्यांयुष्मांश्चपुरुषर्षभ अपवादभयाद्भीतः
किंपुनर्जनकात्मजाम् ३४ जैमिनिरुवाच रामेब्रुवतिदुर्वारेसीतांत्यक्तुंकृतोद्यमे ततोभ
रतशत्रुघ्नौगृहंस्वंस्वमगच्छताम् ३५ लक्ष्मणोनययौरामस्तस्मादुःखार्दवागनम् लक्ष्मणंकेवलंदृ-
ष्ट्वारामोवाक्यमथाब्रवीत् ३६ सौमित्रेछिंधिखड्गेनशिरोमेनविचारय सीतांभागीरथीतीरेत्यक्तु
वागच्छमाचिरम् ३७ सीतापरित्यागभवोदोषोममभवतुवास्तुन नोभितेचरणौभ्रातःसीतांमुंचसरि
त्तटे ३८ रामेणोक्तोलक्ष्मणस्तुलज्जयावनतःश्वसन् संशयाक्रांतचित्तःसन्चिंतयामासचेतसि
३९ श्रूयतेधर्मशास्त्रेषुगुरोराज्ञागरीयसी पुरापरशुरामेणस्वपितुर्वचनात्तथा ४० परश्वधेनवैछि
न्नमाशुस्वजननीशिरः मनसानिश्चयंकृत्वाकर्तुंरामवचोनृप ४१ यंतारमब्रवीद्धीरोरथमानयसात्व
रम् तेनानीतंरथवरंसमारुह्यजगामसः ४२ सीताभवनमुद्दिश्यततोश्वान्यपतन्भुवि अथयंत्रा
कशाघातैस्ताडितास्तेययुःशनैः ४३ संप्राप्यसीताभवनंलक्ष्मणोऽवतरद्रथात् प्रविश्यभवनंसीतां
नमश्चक्रेप्यवाङ्मुखः ४४ सीतैवंविधमालोक्यलक्ष्मणंवाक्यमब्रवीत् सीतोवाच
मनोरथप्रदोभर्तामम्राजीवलोचनः ४५ मयाहसंत्यायद्रात्रौयाचितंतद्ददौरघुः दत्तोपिनिःफ
लंदेवयावत्त्वंनैवदृश्यसे ४६ अधुनातद्रघोर्वाक्यंसत्यंकर्त्तुंत्वमागतः गृहाण्यामिविचित्रा
णिवासांस्यगरुचंदनम् ४७ मुनिभ्योमुनिपत्नीभ्योदातुंश्रेयोभिवृद्धये तत्तस्यावचनंश्रुत्वा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

लक्ष्मणोहृदिविव्यथे ४८ मुंचन्नश्रूणिशनकैरेवंकुर्विति सोऽब्रवीत् भ्रातुर्वचनपाशेनबद्धःपरवशस्त्व
दा ४९ जैमिनिरुवाच ततःसीतादुकूलानिनिदधौस्यंदनोपरि अजिनानिविचि
त्राणिरत्नाद्यानिविविधानिच ५० पादुकेरामचंद्रस्यसौवर्णेमणिचित्रिते एवंसंस्थाप्यवस्तूनिश्वश्रूंपृष्ट्वा
मथोययौ ५१ कौसल्यांरामजननींसीतानत्वेदमब्रवीत् दोहदोममसंजातोरंतुंभागीरथीतटे ५२ तं
चपूरयितुंयासोलक्ष्मणोममदेवरः अनुज्ञायुष्मदीयाचेत्ततोगच्छामितद्वनम् ५३ कौसल्यो
वाच सीतेकथंवनंयासिवृक्षकंटकसंयुतम् वराहव्याघ्रसिंहादिसत्वैर्व्याप्तंभयंकरम् ५४
शीतोष्णवातवर्षादिदुःखदंत्वमनिंदिते चिरात्प्राप्तंराज्यसुखंपरित्यज्यशुचिस्मिते ५५ कठोरहृदयैः
सेव्यंवनंगंतुमिहेच्छसि त्वंतुरामंपरित्यज्यवनंगंतुंनचार्हसि ५६ सुखंप्रभातेमलिनंतवोष्ठेशुष्यतः
श्रमात् सीतोवाच मद्भर्तावनवासीनसदाकंटकमर्दनः ५७ निर्मलोजीवयेद्यस्तु
वानरान्कोटिशोरणे तंस्मरंतीतादृशींमांदुःखदंनवनंभवेत् ५८ रामनामजपंत्यास्तममोष्ठोशुष्य
तःकथम् मनोवाक्कर्मभिःसेवायुष्मदीयाकृतामया ५९ ततोममवनेनार्तिर्भविष्यतिचनोभिवः इ
तिप्रदक्षिणीकृत्यश्वश्रूंसीताभिनंदिता ६० कैकेयींचसुमित्रांचनत्वापृष्ट्वाजगामसा यत्रासौलक्ष्म
णःशूरोरथमादायतस्थिवान् ६१ आरुरोहरथंसीताहर्षनिर्भरमानसा सगद्गदितकंठोसौसौमि
त्रिःप्राहसारथिम् ६२ चोदयाश्वान्कशाघातैर्यथाशीघ्रंप्रयांतिहि जैमिनिरुवाच
तस्यतद्वचनंश्रुत्वोवाचसूतोऽथलक्ष्मणम् ६३ अहमश्वमनोवेद्मियथावत्पुरुषर्षभ चलाचलप्रो-
थतयावक्तुंकामाइमेहयाः ६४ शीघ्रंहियदिगच्छेमततोनश्वरणेर्मही दूयेनसीतादुःखेनदुःखितादो
विशेषतः ६५ संग्रामेनोगतिःश्लाघ्यानेदृशेकुत्सितपथि इत्येवंहृदिमन्यंतेवाजिनोभरतानुज ६६
तथापिप्रेरयाम्यद्यपश्यमेहस्तलाघवम् ६६ इत्येवमुक्त्वावचनंससारथिःपाणौमूलेनाभिजघान
कंधरम् रश्मीन्समादायकशामुदीरयन्प्राचोदयत्तीव्रतरान्हयान्सदा ६७ इत्या

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



श्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलक्ष्मणप्रस्थाननामसप्तविंशतितमोऽध्यायः २७

जैमिनिरुवाच गच्छंतींतांसमालोक्यसीतांपद्मनिभाननाम् अयोध्याकिलदुःखेनव्यु
थितावानचंचलैः १ ध्वजानांपल्लवैरेनांवारयंतीवहृश्यते ततस्तेनरथेनासौगच्छंतीजानकीपथि २
ददर्शदुर्निमित्तानिघोराणिसुबहून्यपि शिवासंमुखमागत्यव्यरावीद्दूरवंयथा ३ हरिणामार्गमुल्लंघ्य
प्रधावंतिस्मसर्वशः स्फुरतिस्मततोनेत्रंदक्षिणंपुरुषर्षभ ४ जैमिनिरुवाच ततस्तुवि
परीतानिदुश्चिन्हानिविलोक्यसा विस्मिताजानकीवीरंलक्ष्मणंप्रत्यवोचत ५ पश्यलक्ष्मणचिन्हानि
शिवागोमायवोमृगाः मार्गमावृत्यतिष्ठंतिरुदंतिभयसूचकाः ६ परंस्वस्त्यस्तुरामायकौसल्याहर्षका
रिणे तस्यबाह्वोर्बलंभूयादायुष्यंपरिवर्द्धताम् ७ येनरामेणघोराणिरक्षोवृंदानिभूतले पातिता-
निशरैस्तीक्ष्णैःशमंतस्यास्तुसर्वदा ८ खरश्चदूषणोयेनत्रिशिरायमसादनम् प्रापितावेजनस्थाने
सराज्यंकुरुतांध्रुवम् ९ अगाधोगाधतांनीतोवानरैर्येनसागरः विभीषणोभयात्त्रातःसोऽस्त्वयोध्याप
तिःसुखी १० महाबलौरावणकुंभकर्णौलंकापतीतौपतितौपृथिव्याम् पापस्यसाक्षादिवमूर्त्तिभा
जौभिन्नौरणेयेनशरैःसुतीक्ष्णैः ११ मंदोदरीनेत्रजलैश्चलंकामभ्युक्ष्यवीरंहरिसून्नुमग्र्यं यःप्रेरयामा
समदर्थमेवसराघवोविश्वसुखप्रदोस्तु १२ एवंवदंतीजनकात्मजासौप्रायात्त्रिमार्गांजनपापहंत्रीम्
कल्लोलजालैर्गगनंविहंत्रींपयोऽतिगौरंदधतींपवित्रम् १३ जंबाम्रचंपककुलिंदपलाशसारख
र्जूरपूगकदलीपनसाढ्यतीराम् द्राक्षाफलस्तबकशोभितमंडपालीसौवर्णकैलकवनावलि-
मुद्वहंतीम् १४ तांदेवलोकतटिनींप्रसमीक्ष्यसीताहृष्टाबभूवसफलंममजन्मचैतत् रामस्यकी
र्तिमिवशुभ्रतमांप्रवाहैःपापानिसर्वजगतःखलुनाशयंतीम् १५ जैमिनिरुवाच
लक्ष्मणस्तुरथात्तस्मादवतीर्ययथासुखम् नावंनाविकसंयुक्तामारुरोहतयासह १६
गंगायास्तटमासाद्यपरंभयविवर्द्धनम् अवातरत्ततःसीतानावोलक्ष्मणएवच १७ सौमित्रिर्जानकी





CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

चापिसस्नतुर्जान्हवीजले परिधायततोवस्त्रेजग्मतुर्वनगह्वरम् १८ यस्मिन्धवाश्वखदिराश्वा-
श्चोबदरिकास्तथा बकुलाःपिप्पलाःशक्ताःकोटरैश्चोपलक्षिताः १९ कुशाःकंटकास्तीक्ष्णास्तथा
गोक्षुरकादयः निंबाश्चबहवःसंतिक्रूराःपक्षिगणास्तथा २० जीर्णबोधिद्रुमस्थाश्चकाकाःकेंका
रकारिणः तेषांकोटरमध्यस्थाःसर्पाःफूत्काररकारिणः २१ चित्तकारण्यमाहिषाःसूकराःस्थूलदंष्ट्रि
णः कृष्णांगाऊर्ध्वपुच्छाश्चवृश्चिकाबहवस्तथा २२ व्याघ्रामृगगणंधर्त्तुंनिश्चलायोगिनोयथा बि
डालामूषकबिलंसमाश्रित्यरवनंतिवै २३ तथाविधंवनंदृष्ट्वासीतारोमांचिताबभौ यथारामस्य
कीर्तिस्त्रीकंटकैःपरिवेष्टिता २४ सीतोवाच सौमित्रेनचपश्यामिमुनीनामा-
श्रमानहम् पवित्रवेषास्ताःसाध्वीर्नपश्यामितपस्विनीः २५ मौंजीकृष्णाजिनभृतोक्षदण्डा
न्शिखाभृतः ऋषिपुत्रान्नपश्यामिमुनीन्वल्कलवाससः २६ नाग्निहोत्रोत्थितोधूमोदृश्यतेभर-
तानुज सर्वतोदृश्यतेचायंदावःकाष्ठतृणंदहन् २७ नवेदध्वनिरत्रास्तिश्रूयतेपक्षिणांरुतम् क
थंवेदध्वनिःश्राव्यस्त्यजंत्यारघुनंदनम् २८ मयासोरघुनाथश्चत्यक्तोबुद्धोततोनहि दृश्यंतेमु
निपत्न्यस्ताःमुनिपुत्रामुनीश्वराः २९ पवित्रैरेवदृश्यंतेपवित्राश्रमवासिनः मयारामपराङ्मुखया
पवित्राणिकुरूपया ३० कथंतान्यग्निहोत्राणिदृश्यंतेवनवासिनाम् जैमिनिरुवाच
वचांसितानिसौमित्रिःशृण्वन्नश्रूण्यमुंचत ३१ अधःपश्यन्नुवाचासौलक्ष्मणोविह्वलोबहु
लक्ष्मणउवाच संतिसआश्रमादूरेगम्यतांवैशनैःशनैः ३२ रामेणत्वंपरित्यक्तासत्यं
लोकापवादतः तवापिदोहृदोजातोद्रष्टुंभागीरथींनदीम् ३३ मामसौप्रेरयामासत्वांद्रष्टुंगहने-
वने किंकरोस्म्यवशोमातभ्रातुस्तस्यवचोहरः ३४ इतितस्यवचःश्रुत्वापपातधरणीतले मूर्छिता
जानकीतस्मिन्नवरादोहिणीयथा ३५ छिन्नमूलायथावल्लीगृष्टिःशूलाभिपीडिता कुमारीसर्पदष्टे
वतद्वत्साभूतलेपतत ३६ ततस्तांलक्ष्मणस्त्वक्तोवस्त्रांतेनाभ्यवीजयत हस्तेनैकेनचच्छायांकुर्वं

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

श्च मुखपंकजे ३७ उवाचत्यदिरामस्य साक्षात्सेवाकृतामया तर्हियिजानकीशीघ्रसमुत्तिष्ठ ... ॥ ३८ ॥ २
इत्येवं वदतस्तस्य चेतनालभतेस्म सा नेत्रेसमुन्मिलंतीवै लक्ष्मणदहशोगुरुः ३९ अवोचत्तशनैरेव श्वास
त्कागहनेवने कथंयास्यसिसौमित्रेजनस्थानयथापुरा ४० देवराणांदेवरस्त्वं ममपूज्यतमोमतः त्व
याहंदंडकेत्राताविराधाकगतापुरा ४१ फलमूलांबुभिः शश्वत् परिचर्याकृतात्त्वया पर्णशालाविचि
त्रास्तामदर्थंसुपकल्पिताः ४२ इदानींत्वदृतेताःस्ताः कः करिष्यतिलक्ष्मण अग्रतः पातिरामोमांपृष्ठत-
स्तुभवान्वने ४३ हादुःखंतुमयाप्राप्तं रामोमांविजहौयतः अपराधाहतेवीरोराजाराजीवलोचनः ४४
मनसाकर्मणावाचानापरंध्यामितंपतिम् सदातच्चरणौचित्ते चिंतयामिमनोरमौ ४५ मुखंपद्मवि
शालाक्षंनिर्मलंचंद्रबिंबवत् चारुदंष्ट्रंनिर्मलंचकुंडलाभ्यांसुशोभितम् ४६ मुक्तामाणिक्ययुक्तेनकि
रीटेनोपलक्षितम् द्रक्ष्यामिरामस्यकथंपतितागहनेवने ४७ काकपक्षधरः पूर्वं रामः कौशिकसंयु
तः आगतोमिथिलांपूर्णस्त्वयासहमहामते ४८ त्रैयंबकंद्विधाचक्रेपरिणेतुंचमांधनुः मदर्थंवानरैः
सार्द्धंसख्यंयोव्यदधाद्विभुः ४९ मद्वियोगेसतिपुरावृक्षानालिंगतिस्मयः सरामोव्यजहात्सीतांदेवमेव
हिकारणम् ५० नदोषस्तस्यरामस्यममास्यमितिचिंतये अथवाप्राक्तनानांहिविपाकोममकर्मणाम्
५१ लक्ष्मणत्वंमहाबाहोनिर्दोषस्त्वेवराघवः अयोध्यांगच्छशीघ्रंत्वंयतोहिपरवानसि ५२ योगर्भे
रक्षितादेवोयोवैलकाधिवासिनीम् मांसवैरक्षिताचाद्यनदुःखंकर्तुमर्हसि ५३ लक्ष्मणत्वंमहाबाहो
श्वश्रूंविज्ञापनंकुरु युष्माकंचरणौनित्यंचिंतयामिवनेचरा ५४ ससत्वाहंवनेत्यक्तारामेणापिविजा
नता इत्येवंविलपंतीसाजानकीगहनेवने ५५ पुनरेवशुभाचारालक्ष्मणंवाक्यमब्रवीत् सीतो
वाच व्यापारेऽस्मिन्कथंरामस्त्वांकृपालुमयोजयत् ५६ प्रेरणीयः ससुग्रीवः कठिनोभ्रातृघात
कः विभीषणोवाबलवान् रावणस्यानुजोध्रुवम् ५७ वृथात्वांप्रेरयामासत्यागेममरघूद्वहः गच्छलक्ष्म
णभद्रंतेत्वांपुरीरामपालिताम् ५८ मार्गेक्षेमंभवतुतेभ्रातातेकुप्यतेरघुः इतितस्यावचःश्रुत्वासौ

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

मित्रिर्दुःखितोभृशम् ५९ प्रदक्षिणीकृत्यतदानमस्कृत्यवाङ्मुखः गच्छन्नुवाचसौमित्रिस्त्वांमातर्वनदेवताः ६० रक्षन्तुविपिनेचास्मिन्नेषगच्छामितद्दृशः निर्ययौलक्ष्मणोवीरःपश्यंस्तांजनकात्मजाम् पादौनचलतस्तस्यकृच्छ्रेणमहताययौ पश्यतीजानकीमूर्तिंलक्ष्मणस्यापिनिश्चला ६२ नदर्दर्शतदातन्तु निपपातधरातले मूर्च्छितांजानकीतत्रमुहूर्तंस्मावतिष्ठति ६३ अथैत्यवीरःसौमित्रिस्तीर्त्वाभागीरथींययौ एकाकिनीवनेबालाविललापमृगीयथा ६४ हापापकिंमयाचीर्णंयत्त्यक्तास्म्यहंनेवने जनकस्यकुलेजातादत्तास्मिरघवेपुरा ६५ दिशोवलोकयामासशून्याश्चविदिशस्तथा आगमिष्यतिचैवायंलक्ष्मणोपिहसेत्स्वकिम् ६६ पुनर्मूर्च्छामवाप्यासौजानकीभयविह्वला तद्दुःखदुःखिताहंसारुदन्तिकूरनिःस्वनम् ६७ मृणालानिपरित्यज्यतदद्भुतमिवाभवत् तृणांकुरविहायाशुसीतांपश्यतितादृशीम् ६८ एणशावाहरिणश्चकृष्णसाराविशेषतः मयूरानृत्यमुत्सृज्यतस्मिन्कालेप्रधाविताः ६९ शकुन्ताविजहुर्भक्ष्यंछायांपक्षैःसमकुर्वते जलस्थाःपक्षिणश्चापिसिषिचुर्जनकात्मजाम् ७० चमर्यःपुच्छचमरैर्वीजयन्तिस्मजानकीम् अथभागीरथीतीरेस्नातःपुष्पाण्युपाहरन् ७१ अर्चयामासपवनःसीतांसौगंधसंयुतः तदास्थिताविशालाक्षीरामरामेतिभाषिणी ७२ विचेष्टंतीमुक्तकेशाभूमौपांसुभिरावृता यदिप्राणानिमान्हास्येभ्रूणहत्याभविष्यति ७३ इतस्ततोधावमानास्खलंतीचपदेपदे कुशानांकंटकास्तीक्ष्णाःपादयोराचरन्व्यथाम् ७४ सुस्रुवेरुधिरंपन्थावैदेह्याभरतर्षभ एवंदुःखातुराबालावर्ततेस्मतदावने ७५ तावत्सधीमान्बहुभिःसमावृतोवाल्मीकिःशिष्यैस्तपोभिरीडितः यूपानथछेदयितुंमखार्थंसमागतस्तांददृशेविषण्णाम् ७६

इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेवाल्मीकिसमागमनामाष्टाविंशोऽध्यायः २८

जैमिनिरुवाच

वाल्मीकिस्तांततोदृष्ट्वा विषण्णांदीनचेतसम् तपःसिद्धिमिवक्लिन्नांस्वकीयामनवेक्षणात् १ उवाचकात्वंकल्याणिपुत्रीकस्यपरिग्रहः कस्मादस्मिन्वनेशून्येखिद्यतेनितरांत्वया २ ततःसीतानमस्कृत्यप्रोवाचातीवदुःखिता सुम

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



वैजनकस्याहं स्नुषा दशरथस्य च ३ रामस्य भार्याभूदेवं सदा पतिपरायणा त्यक्तास्मि तेन शो[illegible]नजाते के
न हेतुना ४ वाल्मीकिरुवाच सीते लक्ष्मणपुत्रौ द्वौ मा शोकं कुरु सुव्रते वाल्मीकिरिति
नामाहं मुनिर्जनकपूजितः ५ आसाश्रमं मे रुचिरं फलपुष्पसमावृतम् पर्णशालां विधास्यामि त्वदर्थं वर
वर्णिनि ६ यत्र प्रसूतिर्भविता रुचिरा तव जानकि मुनेस्तद्वचनं श्रुत्वा हर्षिता जनकात्मजा ७ निदाघार्त्ता
मयूरीव श्रुत्वा वै घननिस्वनम् बाढमित्येवमुक्त्वा सा प्रययौ पृष्ठतो मुनेः ८ तया सह महाभागो वाल्मीकिः
प्राप आश्रमम् यस्मिन्व्याघ्राश्च सिंहाश्च गोभिः क्रीडंति हर्षिताः ९ बिडालाः श्येनुलीयं तैर्मूषकाः स्वबिले
यथा नकुला उरगाश्चैव मयूराश्चत्र रेमिरे १० रमंते स्म मृगैः सार्द्धं चित्रकास्त्यक्तमत्सराः सरसीषु वि
चित्राः सकबका मत्स्यान्न हंति हि ११ सा तेनमाश्रमं दृष्ट्वा वाल्मीकेस्तांस्तपोधनान् ऋषिभार्याः शुभाचाराः ऋषि
पुत्रांश्च शोभनान् १२ हर्षेण महताविष्टा नमश्चक्रे पुनः पुनः ताभिस्तैश्च प्रयुक्ताशीर्जानकी शुभलक्षणा १३
कल्पितां मुनिपुत्रैश्च पर्णशालामुपाविशत् दत्तानि मुनिपत्नीभिः फलानि बुभुजे पयः १४ पालाश
निर्मले तस्यां शालायां सा स्म तिष्ठति नीतिस्म चरणौ नित्यं वाल्मीकेः शृणुते कथाः १५ एवं तस्मि
न्वसंत्याश्च सीताया ह्यगमन्नव मासा गर्भस्य वाल्मीकेराश्रमे फलितद्रुमे १६ अतीते नवमे
मासे जानकी सुषुवे यमौ निशीथे च मुहूर्ते च मुनिपत्न्यो विचक्षणाः १७ तत्रत्य सुपचारं तु क
ल्पयामासुरागताः गायंति गीतं हर्षेण सीते यस्सुषुवे यमौ १८ अनयोः प्रभया वेश्म दीप्तमा
सीत्समंततः दिशस्तु विमला जाता ववौ वातोऽतिसौरभः १९ प्रदक्षिणार्चिस्तत्रासीदव्यशोभ
त हुताशनः ततः शिष्याः प्रधावंति वाल्मीकिं प्रतिशंसितुम् २० असूत पुत्रौ भो ब्रह्मन् जानकी
विस्मयो महान् ततो मुनिः कुशान्रम्यान्लुवान्मुष्टिमितान्दधन् २१ आगतो यत्र तौ बा-
लौ हस्वा हर्षसमन्वितः तावभ्यषिंचद्दर्भैश्च लवैः सार्द्धं मुनिस्तदा २२ तन्नामानौ मुनि
श्चक्रे वाल्मीकिर्मुनिसत्तमः दिने दिने वर्द्धमानौ चंद्रसूर्याविवोदितौ २३ जातकर्मादिकं सर्वं



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

चक्रेसऋषिसत्तमः द्वादशाब्देनतोमौंजीबंधनंव्यदधात्तयोः २४ प्रार्थयित्वाकामधेनुंवसिष्ठान्मु
निपुंगवः वाल्मीकिर्भोजयामासब्राह्मणान्वनवासिनः २५ कामधेनोःसकाशाद्धि भक्ष्याः प्रादुरभूच्छु
भः सूपंविचित्रंसुद्धान्नंशाकाश्चविविधाअपि २६ चंद्रबिंबसमाजाताःपूपाःशतसहस्रशः पूरिकाघृ
तपक्वाश्चशतच्छिद्राउदुंबराः २७ फलान्यमृतकल्पानिप्रादुर्भूतानिधेनुतः करंजिकामोदकाश्चत
थावैसूत्रकोद्भवाः २८ निस्तुषाणांतिलानांचनारिकेलसमुद्भवाः चारबीजोद्भवावृक्षनिर्यासकृतबं-
धनाः २९ फेणिकाश्चंद्रबिंबाभाःसहस्रपुटसंयुताः पर्पटामाषसंभूतास्तथातंडुलचूर्णजाः ३० ए
वंविधानिचान्नानिपक्वान्नानिददातिगौः तेनचान्नेनवाल्मीकिस्तर्पयामासतान्जनान् ३१ ततःकृ
तोपनयनावादित्योद्वौकुमारकौ अध्यैषातांशिशूवेदंसांगंवाल्मीकिनोदितम् ३२ तस्माद्रामचरित्रं
तज्जगतुर्मधुरस्वनौ लवस्तालधरश्चासीद्वीणाहस्तःकुशोजगौ ३३ आलापैर्गगनंसर्वंव्याप्नुव
न्शृण्वतांमनः ततस्तेमुनयोहृष्टाःसाधुसाध्विंतिचाब्रुवन् ३४ धनुषीप्रददौधीमान्वाल्मीकिः
सगुणेदृढे इषुधीचाक्षयौरेभ्यस्ताभ्यांतस्यमुनेःसखा ३५ तपोधनास्ततःसर्वेअस्त्रग्रामंत
योर्ददुः तपोबलेनतेसर्वेमुनयःप्रददुःशरान् ३६ किरीटकवचान्यकेददुःखड्गौचचर्मणी एवंध
नुर्धरौवीरौतनुत्राणभृतौयमौ ३७ काकपक्षधरौतस्मिन्नाश्रमेचरतःस्मतौ सीतांशुश्रूषमा
णौतौकंदमूलफलैःशुभैः ३८ पादसंवाहनैश्चापिपरांप्रीतिंवितेनतुः जैमिनिरुवाच

अयोध्यायांमहाबाहुःपालयन्रघुवंशजः ३९ नशर्मलेभेरामोऽसौब्रह्महत्याभिपीडितः अ
श्वमेधंक्रतुवरंकर्तुकामोऽप्यभूद्रघुः ४० वसिष्ठंचसमाहूयविश्वामित्रंचगालवम् वामदेवंमुनिश्रे
ष्ठमिदंवचनमब्रवीत् ४१ रघुनाथउवाच अश्वमेधंकरिष्यामिकथ्यतांतस्य-
वैविधिः अश्वश्चकीदृशोभाव्योदानंकीदृग्विधीयते ४२ किंमयाचरणीयंस्याद्धृतंतत्त्वनिरूप्यताम्
ततोवसिष्ठःकथयांबभूवदुःखेनसाध्यःकिलयज्ञएषः अश्वश्चभाव्यःकुमुदेंदुवर्णःपीतश्चपुच्छेभलि

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



नश्वकर्णो ४३ सरक्षणीयोब्द मलंनृवीरैर्धृतः परैश्चापिविमोक्षणीयः आरंभएवास्याहिविप्रवर्याःपू
ज्याःसहस्रंश्रुतिपारगाश्च ४४ एकोरथोवारणएकएवदशाश्वमुख्याश्चसुवर्णभारः शतंगवांहेम
विभूषितानामस्यश्चदेयोवरमौक्तिकानाम् ४५ एकैकशोभृत्यचतुष्टयंचकार्येषुदक्षंकिलदेयमत्र
४६ असिपत्रव्रतंरामकथंत्वंतुविधास्यसि यज्ञकर्मणिवैभार्याद्वितीयासहधर्मिणी ४७ तयावि
रहितंरामविफलंपरिकथ्यते रामउवाच सौवर्णीप्रतिमाकार्याजानकीसदृशीप्र
भो ताहश्यासीतयासार्द्धंकरिष्येव्रतमुत्तमम् ४८ अश्वमेधसमारंभःक्रियतांमुनिपुंगवैः अश्व
शालासुरुचिरशास्त्रोक्तैर्लक्षणैर्युतम् ४९ निरीक्ष्यवाजिनमथंततोदीक्षाप्रदीयताम् तद्भाषित
मुपश्रुत्यवसिष्ठोमुनिभिर्वृतः ५० वाजिशालासुधवलमश्वसाहारयन्नरैः गोक्षीरवर्णमुखतःकुंकु
माभसुकेसरम् ५१ एकतःश्यामकर्णंतंहयमालोक्यविस्मितः वसिष्ठोब्राह्मणान्सर्वान्सहस्रैःप
र्यपूजयत् ५२ वस्त्रालंकरणैर्दिव्यैर्वाजिभिश्चमनोजवैः रथैश्चवारणैर्मत्तैःकलधौततरैःशुभैः ५३ दो
ग्ध्रीभिर्धेनुभिश्चैवपूजयामासतान्द्विजान् ततश्चदीक्षितोरामस्ताहश्यासीतयासह ५४ हयंतंपू
जयामासचंदनेनसुगंधिना पुष्पैःस्त्राग्भिश्चचमरैःशोभितंरघुनंदनः ५५ भालेबध्वाचसौवर्णंप
त्रंतस्यहरेःपुनः तस्मिन्पत्रेविलिखितंरामोदशरथात्मजः ५६ एकवीराचकौसल्यातस्याःपुत्रोम
हाबलः तेनमुक्तंहरिवरंगृह्णातुबलवान्नरः ५७ इत्यभिप्रायसहितंपत्रंभालेव्यशोभत शत्रुघ्नं
चादिदेशाथत्वयारक्ष्यस्तुरंगमः ५८ ततःसतुरगोमुक्तःपृष्ठतोलक्ष्मणानुजः अक्षौहिणीभि
स्तिसृभिर्जगामसहितोबली ५९ नानादेशान्व्यतिक्रम्यनगरोपवनानिच लीलयाविचचाराशु
शत्रुघ्नसहितोहयः ६० राजानस्तंहयंदृष्ट्वानमश्चक्रुःपराङ्मुखाः येशूराबलवंतश्चतेगृह्णंतिहयोत्तमं
६१ तान्जित्वाबलवान्वीरान्शत्रुघ्नोमोचयद्धयम् ततःसतुरगःप्राप्तोवाल्मीकेराश्रमेशुभे ६२ वाल्मी
किर्वरुणाद्भूतोमखार्थंतलमभ्ययात् आश्रमोपवनंरम्यंप्रविवेशतुरंगमः ६३ दाडिमाःफलितायत्रचू



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

ताः पल्लविनोनवाः मुनिद्रुमाः पुष्पधृतोराव्याः किंचद्विकांचिताः ६४ अनेकाः पुष्पजालाश्च पुष्पिताः देव
ताइव मृद्वीकामंडपारम्याघटयंत्रैः सुशोभिताः ६५ रंभास्ताः फलितायत्र सर्वलोकालिसमागताः त
द्रक्ष्यमाणोवीरोसौ धनुःपाणिर्लवोबली ६६ दूर्वांकुरांश्चरंतं तु वाजिनं ददृशेपुरः ऋषिपुत्रान्समाहू
यहयाभ्याशंजगामसः ६७ हरेर्भालगतं पत्रंवाचयामासबालकः एकवीराद्यकौशल्यात्तस्याः पुत्रो
रघूद्वहः ६८ तेनरामेणमुक्तोऽसौवाजीगृह्णामिसंबली तत्पत्रस्थमभिप्रायंज्ञात्वाशीघ्रंलवोब्रवी
त् ६९ अस्माकंजननीवंध्यात्वेकवीरानसाकिमु इत्येवमुक्त्वावचनंलवोदधेतुरंगमम् ७० उत्तरीयंस
मुत्क्षिप्यबबंधेकदलीतरौ वारयंतिस्मतंवीरंमुनिपुत्राभयान्विताः ७१ मुनिपुत्राऊचुः ल
वलयापरोवाजीयथायंबद्धातेबलात् अस्ययेरक्षकास्तेत्वांनेष्यंतित्यज्यतामयम् ७२ अनाहत्यवच
स्तेषामब्रवीत्कुपितोलवः लवउवाच ऋषिस्त्रीकुक्षिजायूयमहंसीतोदरोद्भवः ७३
सीतायाश्चोदरेजातोह्यमिरे वनसंशयः यद्यमुंवाजिनंबध्वामुच्येयंभयशंकया परंश्रेयस्तुमरणं
नलज्जामासुपाव्रजेत् ७४ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेतुरंगग्रह
णोनामएकोनत्रिंशोऽध्यायः २९ जैमिनिरुवाच ततः प्राप्तंमहत्सैन्यंरथवाजिसमाकुलं
मत्तद्विरदसंबाधंपत्तिभिश्चसमावृतम् १ कुतोश्वश्चकुतोऽश्वश्चव्याहरंतोमहाबलाः रथिनः शत
साहस्राः प्राप्ताः शत्रुघ्नपालिताः २ ददृशुः कदलीवृक्षेबद्धमश्वंमहारथाः पप्रच्छुः केनबद्धोयंल-
घूस्तान्ब्रह्मचारिणः ३ तेब्रुवन्नाम्रवृक्षस्यमूलेतिष्ठतिनिर्भयः लवश्चनाम्नाविख्यातस्तेनायंवि
धृतोहयः ४ प्रहस्यरथिनस्तेतुप्रोचुर्मूर्खोसिबालकः बलंहयंपालयंतंनजानास्येषवैशिशुः ५
मुच्यतांमुच्यतांचाश्वोयथार्शाघ्रंव्रजेद्गुराम् तावत्प्राप्तोमहाबाहुर्धनुःपाणिर्लवोबली ६ किमिदंक्रि
यतेवीरैः क्रियतेहयमोचनम् मांजित्वामुच्यतामश्वोमयितिष्ठतिनक्वचित् ७ अश्रृण्वतांवचस्ते
षामोत्कृणांहयमुत्तमम् विच्छिदहस्तान्सलोवलेननिशितैःशरैः ८ तेछिन्नहस्ताद्योद्धारो ब्रुव-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



तिस्मानिपात्यताम् ततस्तेशरवर्षेणववृषुस्तेसमागताः ९ केचिच्छक्तींश्चपाशांश्च चिक्षिपुःशत
शोबलात् आपतच्छरसंघातोनपस्पर्शलवंतदा १० यथाहिगौतमीतोयेस्नातपापचयोमहान्
तच्छरत्रसंघंचिच्छेदयोगीवभवबंधनम् ११ पंचभिःपंचभिर्बाणैरेकैकंहृद्यताडयत् निषंगाभ्या
मसयाभ्यांगृह्णन्बाणान्मुमोचसः १२ गजाभिन्नाद्विधाबाणैःशुंडाश्छिन्नाद्विधाद्विधा शिरां-
स्याधोरणानांचचिच्छेदनिशितैःशरैः १३ काश्मीरकंबलान्वीरोघंटाश्चिच्छेदलंबिताः हस्तिम
स्य पताकाश्चव्यलुनात्सलवोबली १४ रथान्कांचनसन्नाहानश्छिनद्दान्विनांवरः चक्राणिचक्रर
क्षांश्चनिर्वणून्सारथींस्तथा १५ अश्वांश्चव्यधमद्बाणैस्तथावैरथसारथीन् चामराणिध्वजस्तं-
भान्धनूंषिसद्दानिच १६ तूणीरान्निशितैर्बाणैश्चिच्छेदसकुशानुजः अवधीत्तुरगांश्चापिसास्वा
रोहान्रघूत्तमः १७ एवंलवोमहत्कर्मचक्रेसंग्राममूर्द्धनि जैमिनिरुवाच सहस्त्रा
निहतंसैन्यंबालकेनपदातिना १८ शत्रुघ्नःकुपितोवीरोरथमारुह्यचागमत् विस्फारयन्धनुश्चेषं
तिष्ठतिष्ठेतिचाब्रवीत् १९ एवंवदंतंशत्रुघ्नंविव्याधदशभिःशरैः श्रयन्माहेश्वरंस्थानंलवोनिर्भय-
मानसः २० हृदिनैकेनविव्याधचतुर्भिश्चतुरोहयान् अभिनद्ध्वजमेकेनचतुर्भिश्चक्ररक्षकान्
२१ ततश्चैकेनबाणेनधनुर्ज्यामच्छिनल्लवः आरोपयित्वाशत्रुघ्नोज्यांद्वितीयांशरासने २२ ततोनालीकनारा
चांस्तीक्ष्णभल्लान्मुमोचसः त्रिभिर्ललाटेविव्याधलवंतंलक्ष्मणानुजः २३ त्रिभिस्तैस्ताडितोबालःप्रहस
न्वाक्यमब्रवीत् लवउवाच ललाटेममपुष्पाणिलग्नानिकमलानिकिम् २४ एतावत्तेबलंवीरसमग्रं
परिलक्ष्यते इत्येवमुक्त्वावचनंचतुर्भिश्चतुरोहयान् २५ अनयन्निशितैर्बाणैर्यमस्यसदनंमहत् सारथेश्चशि
रःकायाच्छरेणैकेनचाहरत् २६ द्वाभ्यांशराभ्यांचिच्छेदध्वजंचास्यसमुच्छ्रितं द्विधाचक्रेलवोबाणैःशत्रुघ्न
स्यधनुर्दृढं २७ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः शत्रुघ्नःकुपितोवीरोधनुरन्यत्समाददे २८ सगु
णंधनुरादायशरंचैकंसमाददे पीतवर्णंसुनिशितंगार्द्ध्रपत्रैरलंकृतं २९ ततोब्रवीत्सशत्रुघ्नःपलायस्वशिशो



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

ऽधुना अन्यथामरणंतेस्यात्कृपामांबाधतेत्वयि ३० तदाकर्ण्यवचस्तस्यकुपितोबलवांल्लवः चिच्छे
दतंशरंदिव्यंसद्विधाव्यपतद्भुवि ३१ शत्रुघ्नोविस्मयाविष्टोबाणंचान्यंसमाददे तंशरंकालसंकाशंयावद्ध-
नुषिसंदधे ३२ तावत्सचापंसशरंचिच्छेदकुपितोलवः ततोजग्राहशत्रुघ्नोलवबंधेनचावधीत् ३३
तद्धनुस्तंशरंदिव्यंसूर्यवैश्वानरप्रभम् मुमोचबाणंरुचिरंहतोऽसीतिवचस्तथा ३४ अमोघंसशरंज्ञा-
त्वालवःसस्मारतंकुशम् अस्मिन्नवसरेभ्राताकुशोमेविद्यतेयदि ३५ तदास्यबाणस्यभयंनस्यान्म
मकदाचन अथतेजानकीसत्यात्सातिव्रत्यादमुंशरम् ३६ छेद्मिमेस्यात्ततःकीर्तिरितिबाणंमुमोचसः
तेनबाणेनतंबाणंमध्येचिच्छेदबालकः ३७ जैमिनिरुवाच पूर्वार्द्धेन्यपतद्भूमावुत्तरार्द्धेनचाप्यतत्
तेनार्द्धेनधनुश्छित्वालवस्यहृदयंतथा ३८ सच्छिन्नधन्वाहृदिताडितोदृढंविसंज्ञभावेनिपपातभूतले
शिखीसुवेषोरुधिरावलिप्तोमुमोहबालोनविवेदकिंचन ३९ ततःशंखांश्चभेरींश्चवादयंतःप्रहर्षिताः
योधाःशत्रुघ्नसैन्यस्थामृतशेषाजगर्जिरे ४० मुमुचुस्तंहयंवीराभीतंदृष्ट्वाचतंलवम् मुक्तःसतुरगो
योधैर्बभ्रामोपवनेतदा ४१ कृपाविष्टश्चशत्रुघ्नोलवमुत्थाप्यपाणिना श्रमाक्रांतरथंबालःसिच्यतांपयसा
ऽधुना ४२ ततस्तेसेवकाःशीघ्रमंभोभिःसिषिचुर्लवम् सजीवंरथमारोप्यपृष्ठतोऽश्वस्यतेययुः ४३
इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलवमूर्छाप्राप्तिर्नामत्रिंशोऽध्यायः ३० जनमेजयउवाच
लवेधृतेयथायुद्धंघोररूपंबभूवह जगामकुत्रचकुशःकथंसीताविवेदतत् १ जैमिनेसर्वमाचक्ष्वप-
वित्रांकुशसत्कथाम् जैमिनिरुवाच शृणुराजन्प्रवक्ष्यामिकुशस्यचरितंमहत् २ यच्छ्रुत्वासर्वपापे-
भ्योमुच्यतेस्त्रीपुमानपि अश्वेप्रचलितेतस्मिंल्लवेनीतेमहारथैः ३ अश्रुपूर्णमुखाःसीतांमुनिपुत्रा
ब्रुवंस्तदा सीतेबद्धोलवेनाश्वःकस्यचिन्नृपतेर्बलात् ४ नृपतेस्तस्यसैन्येनपुत्रस्तेयुयुधेलवः नि-
हत्यसैन्यंबालोऽसौश्रांतोवीरेणकेनचित् ५ धृतोहस्तगतंछित्वाधनुर्नीतःपुरंप्रति तद्वाक्यमाकर्ण्य
बभूवजानकीचिंतास्थितादेववरांगनासती यथाहिविद्युध्वनिनाकुमारिकाधनीनरोवस्त्वपहारतो-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



यथा सीतोवाच मनसाकर्मणावाचायद्यहंरामतत्परा तेनसत्येनमेपुत्रोलवोस्तुकुशलीरणे ७ तावज्जीव्याल्लवः पुत्रोयावज्ज्येष्ठःसमाव्रजेत् एकाकीनिहतोबालः पापिष्ठैस्तैर्महारथैः ८ रुरोदसाभृशंबालपुत्रशोकेनपीडिता मामनापृच्छ्ययातोऽसिआसनेनिरतोलव ९ चंद्रबिंबसमाननेसुखंबाणैरभिद्यत गात्रंस्यात्छकलीजातंलवस्यनिशितैःशरैः १० कंदमूलफलाशीनद्वादशाब्दोविचक्षणः परंतुयुद्धतांतेषांशूराणांतंचबालकम् ११ क्रूराःकथंप्रहर्त्तारस्तेनिर्दयानांचपापिनाम् अस्मिंश्चसमयेतातोवाल्मीकिर्नकुशोबली १२ कस्येदंपुरतोवक्ष्येदुःखंप्राप्तंसुदारुणम् जैमिनिरुवाच तावत्समित्कुशाहारीवनान्निवर्त्ततेकुशः आगच्छतःकुशस्याथदुर्निमित्तानिभारत १३ बहूनिपथिजातानिचित्तोद्वेगकराणिच अपसव्यंमृगायांतिनदंतोभैरवंरवम् १४ ततःसव्यथयाविष्टोरामपुत्रोरघूद्वहः चिंतयामाससमनसाकेशवंविघ्नहारिणम् १५ चिंतयाविष्टमनसोबाहूतोस्फुरतोभृशम् नेत्राभ्यांस्वयमेवांभःस्रस्रुवेविव्यथेमनः १६ एवंसआश्रमद्वारंकुशःप्राप्तोव्यचिंतयत् लवोजवेनचायातिकथंमेसम्मुखोनहि १७ आयांतंतंलवंभ्रातर्निवारयितवानहम् तस्मात्किंकुपितोनैतिकेनचासौधृतोलवः १८ इत्येवंचिंतयन्वीरोददर्शजननींस्वकाम् सीतांनमस्कृत्यकुशोजगादवचनंशुभम् १९ मातःकस्मात्प्रलापोयंक्रियतेक्वलवोगतः सीतोवाच कस्याप्यश्वंचरंतंसजग्राहकुपितोलवः २० तैर्नीतस्तेपुरंबध्वाजीवन्वामृतएववा कस्तंमोचयिताबालंत्वांविनाकुशपुत्रक २१ यथाविष्णुःस्मृतोभक्तंसंसारान्मोचयेद्द्रुतम् ततस्यावचनंश्रुत्वानिशाखांभ्रुकुटींदधत् २२ नेत्रेविलोहितेबिभ्रत्कुशोवचनमब्रवीत् कुशउवाच अद्यमद्बाणभिन्नानांवैरिणांरुधिरंधरा २३ पास्यतेरुचिरंसोष्णंशोषितंसूर्यभानुभिः इंद्रश्चवरुणोवापिकुबेरोवामहाबलः २४ यमश्चयक्षगंधर्वास्तेषांसाहाय्यकारिणः भवंतिसर्वेदेवाश्चसाध्याश्चापिमरुद्गणाः २५ तथाऽपितान्रणेजि

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

त्वालवंतं परिमोचये एष गच्छामि भो मातर्निषंगौ धनुरेव च २६ प्रदेहि चर्म खड्गं च किरीटं कवचं तथा सीता प्रविश्य शालायां प्रददौ विषुधी धनुः २७ चर्म खड्गं किरीटं च कवचं च कुशोऽग्रहीत् सन्नद्धः कवची खड्गी चापबाणधरो युवा २८ कुशो ययौ नमस्कृत्य जननीं तां च जानकीम् सीतया सोऽप्रयुक्ताशीः कुशो बाहू व्यताडयत् २९ विस्फारयन्धनुश्चोग्रं जगाम त्वरितो बली यथा मत्तद्विपान्सिंही तनयोऽभ्येति निर्भयः ३० गच्छ तस्तांस्ततो दृष्ट्वा शत्रून्दूरादथाह्वयत् तिष्ठंतु वैरिणः सर्वे यदि शक्तिर्हि विद्यते ३१ नो चेद्वद्धुमेंदीयोऽसौ मुच्यतां वाथ युद्ध्यताम् अनिर्जित्य कुशं वीरं नोपसर्पितुमर्हथ ३२ तच्छ्रुत्वा वचनं घोरं योधा वाक्यमथाब्रुवन् कोऽयमायाति वीरोऽसौ खड्गचर्मधरो युवा ३३ शरचापयुतः शूरः किरीटी कवची महान् कालो नूनं हि सर्वेषाम यं नो भविता किल ३४ इति जल्पंति वै सर्वे सैन्यका भयविह्वलाः ध्वजाः कणकणायंते द्रुमा वाते रिताइव ३५ किरीटानि च वीराणां गृध्राः पस्पर्शुरंबरात् तस्मिन्काले निषंगेभ्यः स्वयं निर्यांत्यलं शराः ३६ कोशेभ्यश्च पृथग्भूताः स्वयमेवासयो ययुः चंडो वातः प्रववृते द्रुमानुन्मूलयन्ध्वजान् ३७ रजसा संवृतं व्योम सूर्योऽस्तं गमनमागमत् क्षणात्प्रशांते रजसि वीरास्ते ददृशुः कुशम् ३८ जैमिनिरुवाच आयांतं तं कुशं दृष्ट्वा शत्रुघ्नो वाक्यमब्रवीत् गच्छ सेनापते शीघ्रं निवारय शिशुं शरैः ३९ यावत्सैन्यव्यूहयामस्तावद्यत्नस्त्वया मारिष सेनापतिरुवाच अहमेनं हनिष्यामि प्रसादात्तव सुव्रत इत्युक्त्वा प्रययौ बालं सेनाध्यक्षस्तदा बली ४० तिष्ठ तिष्ठेति चोवाच विव्याध दशभिः शरैः कुशस्तान्छिन्न द्वाणान्सेनावाहमताडयत् ४१ चतुर्भिश्चतुरोऽस्याश्वान्जघान कुपितः कुशः सारथेश्च शिरः कायाज्जहार प्रहसन्निव ४२ रथं च तिलशः कृत्वा तान्हत्वा पार्ष्णिसारथी निचिच्छेद च धनुस्तस्य कवचं चातिनिर्मलम् ४३ द्वाभ्यां शराभ्यां चिच्छेद हस्तौ तस्य दुरात्मनः चरणौ व्यलुनात्तस्य जघे ते मांसले कुशः ४४ जहार श्मश्रुलं वक्त्रं कं-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



गज्ज्वलितकुंडलम् सेनावाहेहतेतस्मिन्हाहाकारोमहानभूत् ४५ सेनावाहंहतंदृष्ट्वाभ्रातातस्यनगाद्धयः आजगामगजारूढःशक्त्यातंसहनकुशम् ४६ तांशक्तिंवन्हिकूटाभांज्वलंतीमशनीमिव चिच्छेदपंचभिर्बाणैःसीतासूनुर्महाबलः ४७ चरणांश्चतुरोऽप्यस्यगजस्यप्रबलुनात्कुशः सच्छिन्नचरणात्तस्माद्गजादाप्लुत्यधारयन् ४८ गदांविचित्रांमहतींनगेसोऽव्यगमत्कुशम् कुशस्तंगदिनंहस्तेनचिच्छेदाशीविषोपमम् ४९ वामहस्तेनभूमिस्थंचक्रंजयाहलूनदोः तमभ्यपातयन्भूमौबाहुंचक्रधरंकुशः ५० तस्याभिधावमानस्यचरणौवाच्छिनद्द्रुतम् सच्छिन्नचरणोवीरश्छिन्नबाहुर्नगोबली ५१ धूलिधूसरसर्वांगोरुधिरेणपरिप्लुतः आससादनगेताबलंराहुःसूर्यमिवांबरे ५२ छिन्नाभ्यामपृथबाहुभ्यांगदांनिक्षिपतंप्रति सतयाताडितोवीरःपदान्नचलितःपदम् ५३ तुतोषास्यकुशोवीरःप्रतापेनचताद्दृशा ततःक्रानिशितंबाणंवधायास्यमुमोचसः ५४ शरेणतेनतेच्छिन्नंशिरःखेतत्प्रलीयत शंभुनामुंडमालार्थंगृहीतंतद्वरंशिरः ५५ एवंनगेविनिहतेकुशःकोपसमन्वितः नत्सैन्यंव्यहनद्बाणैर्दंडपाणिरिवांतकः ५६ गजान्पर्वतसंकाशान्विददारवृषेवसः उच्छलद्रुधिरेणाथवीरास्तेरक्तवाससः ५७ अजायंतभृशंद्रिमाःपुष्पिताइवकिंशुकाः बाणैःपतद्भिस्तत्रबलादग्निःप्रादुरभून्महान् ५८ रथनागेंधनोवन्हिर्ववृधेसचबालकः पतद्भिर्वीरैर्णैर्मत्तैस्त्रियंतेस्ममहारथाः ५९ स्वयमेवविदीर्यंतेरथाश्चकाणितेध्वजाः जहुःप्राणानश्वचयाःशरैर्भिन्नकलेवराः ६० हस्त्यश्वरथसंघाताःपदातान्यपि तन्भुवि विष्णुभक्तिमकुर्वाणाःसंसृताविवचाधमाः ६१ कन्यावित्तेनयोजीवेन्नदीयाःपितरोयथा एवंविनिहतंसैन्यंरथनागसमाकुलम् ६२ कुशेनतेनवीरेणास्वधर्मेणवर्तितं ६३ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेकुशयुद्धवर्णनंनाम एकत्रिंशोऽध्यायः

३१ जैमिनिरुवाच ततःप्राप्तोमहाबाहुःशत्रुघ्नोधुन्वयन्धनुः विव्याधनवभिर्बाणैःकुशंतंकोपपूरितः १ ततःकुशोऽपिबलवान्रथंसाश्वंव्यचूर्णयत् शत्रुघ्नंहृदिविव्याधशरेणानतपर्वणा २ पुनश्चापच्याविव्याधनाराचानांस्तनांतरे सोऽतिविद्ध-



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

स्तु शत्रुघ्नोरथोपस्थेपपातह ३ यथामत्तोहिमातंगः स्खलितः पर्वतोपतत् हतशेषाश्चयेयोधास्तेप्य
योध्यायमुद्रुतम् ४ अथमूर्च्छांविहायासौलवोपश्यत्स्वबांधवम् उत्थायपरिरभ्यैनंकुशंवीरंजहर्ष
च ५ उवाचचकुशंभ्रातधारयामितुरंगमम् तेनानुनीतः सलवोबबंधेतंतुरंगमं ६ उभौतौभ्रात
रौयुक्तौयथावायुविभावसू प्रतीक्षमाणौवीराणामागमंतस्थतुर्बलात् ७ जैमिनिरुवाच
मृतशेषाश्चयेयोधास्तेगत्वाराममब्रुवन् समासीनंदीक्षितंचमृगशृंगपरिग्रहम् ८ लक्ष्मणेनविसा
नेनचदंडधारंसकमेखलम् भ्रातृभ्यांसहितंशूरंमुनिभिःपरिवारितम् ९ तिलाज्यहोमसंभूतधूमे
नारुणलोचनम् सुवर्णसीतयायुक्तंमंडपस्थमिदंवचः १० योधाऊचुः हेरामतेश्वः पृथि
वींचचारवीरोपिकश्चिन्नदधारतंपुनः एकोगृहीत्वादशएवबालकस्तेनास्मदीयंनिहतंबलंच ११
धृतः कथंचिन्नवचानुजेनछित्वाधनुःश्रांततनुर्हिबालः तस्यापरोबंधुरदीनसत्वः प्राप्तः सचापासि
धरोबलीयान् १२ तेनापिशेषंनिहतंतवोग्रंसैन्यंचमेनापतिनासमेतम् तस्मिन्हतेकश्मलमाशुसै
न्यंजगामसर्वाःप्रदिशोदिशश्च १३ जैमिनिरुवाच तेषांतद्वचनंश्रुत्वारामोविस्मय
मागतः उवाचकिमयंजल्पोयुष्माकंकिमुतभ्रमः १४ पैशाच्यंकिमुयुष्माकंशत्रुघ्नःकेनपात्यते
योधाऊचुः नजल्पोऽस्माकंराजेंद्रनभ्रमोनपिशाचता १५ मृतोयैस्त्वंसकद्रामनजल्पोनपि
शाचता भ्रमोनाविद्यतेतेषांजायतेज्ञानमुत्तमम् १६ साक्षाद्दृष्टेलयिविभोभ्रमोस्माकंकथंभवेत् ज
ल्पःपिशाचतावापिकुतःस्याद्रघुनंदन १७ रणेशेतेसशत्रुघ्नःशिशोर्बाणैःप्रपीडितः ततःसदुःखि
तोरामोविलपन्निदमब्रवीत् १८ रामउवाच विप्रहिट्लवणोयेनघातितोनि-
शितैःशरैः मदीयंवचनंकर्तासशत्रुघ्नोर्भकैर्हतः १९ केनदोषेणमेभ्रातात्द्यवस्थांतादृशींगतः ए
हिलक्ष्मणभद्रंतेशृणुमेपरमंवचः २० अहंहिदीक्षितोभ्रातर्नमयायोद्धुमिष्यते सैन्येनमहतायुक्तो
भ्रातर्गतिर्घनियच्छने २१ तत्रगत्वाप्रयोद्धव्यंमोच्याश्वःसचबांधवः तद्वाक्याल्लक्ष्मणस्तूर्णंप्रययौसोनिकैः

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





सह २२ ततोमनोश्वमानंगारथाः कांचनभूषणाः सादिनोनगरात्तस्मात्पत्तयश्चविनिर्ययुः २३ सर्वे रक्तपताकाश्चसर्वेरक्तांबरध्वजाः चंदनेनावलिप्तांगारणकंकणमंडिताः २४ वीरस्त्रीपरिणेतारः स्रजोभिर्बद्धमूर्द्धजाः साक्षात्कालावताराः किंशुकसंस्थाममीप्सवः २५ युवानःश्मश्रुलावीरायुद्धशौंडाःप्रहारिणः श्वेतांबरधराःसर्वेधीराःश्वेतपताकिनः २६ एकपत्नीव्रतयुताधर्मिष्ठाश्चजितेंद्रियाः निर्ययुर्नगरात्तस्माच्छतशोथसहस्रशः २७ तेषामाधिपतिर्ह्यासील्लक्ष्मणोबलवत्तरः सेनानीःकालजिच्चासीद्धर्मिष्ठोब्राह्मणप्रियः २८ गच्छतातेनसैन्येनकृताःशंकाःसमुद्रगाः सरितःपर्वताश्चूर्णीभूतावाजिखुरैर्हतैः २९ विपिनानिस्थलान्यासंस्तृणंशत्रुसुखेस्थितम् तत्परिग्रहणेस्तैस्तुपयोनसरितामपि ३० चक्रैरथानामश्वानांखुरैःप्रादुरभूद्रजः मेघानामुपरिष्टात्तद्रजःपंकोबभूवह ३१ तेनपंकेनमेघेषुघनत्वमभवत्तदा उच्चानांवारणानांचशुंडादंडैर्भृशंहताः ३२ घनाःपलायंतशनैःपंकभारविनाशिताः पुरस्तात्दुद्रुवंतिस्मखड्गचर्मधरानराः ३३ अश्ववाहाःप्रधावंतःकुर्वंतोविविधागतीः मेघनिर्घोषगंभीरंगर्जंतःप्रययूरथाः ३४ कंपयंतोधरांनागाःपर्वताइवनिर्ययुः जैमिनिरुवाच ववृंहिरेगजामत्ताहयाश्चुहेषिरे ३५ जगर्जिरेरथाश्चक्रैःपत्तयश्चडिडिंबिरे ततःप्रासमनीकंतल्लक्ष्मणस्यभयानकम् ३६ यत्रासौमूर्च्छितःशेतेशत्रुघ्नःसैनिकैःसह ततःसुमित्रातनयःपुरस्ताज्ज्येष्ठोययौकालजितासमेतः ददर्शवीरंविकलंसुकेशंशत्रुघ्नमात्यंतिकजीवशेषम् ३७ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलक्ष्मणागमनंनाम द्वात्रिंशोऽध्यायः ३२ जैमिनिरुवाच तत्सैन्यंभीषणंदृष्ट्वातत्प्रभुंलक्ष्मणंतथा उवाचनिर्भयोधीरःशत्रूणामंकुशःकुशः १ किमिदानींचकर्तव्यंलवसैन्यंसमागतम् वारणानांरथानांचसंख्याकर्तुंनपार्यते २ लव उवाच युद्धमत्रप्रकर्तव्यंहंतव्याःसैनिकास्त्वमी कूष्मांडफलवद्घोरथाश्छेद्यारसालवत् ३ शिरांसिपक्वफलवत्पातनीयानिभूतले भ्रातःकुशमहाबाहोसमग्रस्यबलस्यते ४



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

...सकुशोरणे खड्गचर्मध
विज्ञ... ...रकार्ये... ...हतगजपंक्तिभिः खड्गेनाप्यहनत्क्रुद्धो गजांश्च
...णाल्लवममोचयत् वाल्मीकेराश्रमेताभ्यांसैन्यंसर्वंनिपाति
...स्थतुर्निर्भयौ वा... ...जौस्वमाश्रमम् ३५ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुश
लवोपाख्यानेलक्ष्मणसेनापराजयोनामचतुस्त्रिंशोऽध्यायः ३४ जैमिनिरुवाच
गंगातीरेरामचंद्रोदीक्षितोयज्ञमंडपे भरतंप्रत्युवाचाथमुनिभिःपरिवारितः १ रामचं-
द्रउवाच कथंनायातिवीरोसौविजित्यहयहारिणौ याभ्यांपराजयंप्राप शत्रुघ्नःसतवानुजः
२ सौमित्रिर्वीक्ष्यसंग्रामेत्रैलोक्यंसचराचरम् स्वप्नमध्येविलीयेतप्रत्यक्षंकःसहिष्यति ३ तमद्य
बहुभिर्वीरैःसेवितंरोषपूरितम् पतनादनुजस्यापिमयाज्ञमन्नतौ क्षमौ ४ योधितुंवनजावज्ञौ
चपलौनाथवर्जितौ लक्ष्मणस्यभयात्त्रस्तौशरणंकंगमिष्यतः ५ आनयिष्यतिसौमित्रिःशत्रु
घ्नंधर्मलोपकृतः स्वप्रतापेनपतितंजनन्यैदर्शयिष्यति ६ लक्ष्मणंकुपितंश्रुत्वासंहरन्तंस्वबालकौ
प्रार्थयिष्यत्यनाथाकंरक्षणायतयोःप्रसूः ७ कुतःप्राप्तोस्वनाशायदारकौविघ्नकारकौ दिनद्वयंवि
हीनंमेवर्षमध्येतुरंगमः ८ शत्रुघ्नरक्षितःप्रापयाभ्यांपार्श्वेनिबंधनम् मामनादृत्यभरतंसुग्रीवंच
विभीषणम् ९ अंगदंवालितनयंहनूमंतंमहाबलम् अन्यान्ममसुहृद्वृंदं धूनंतृणीकृत्यापहारकौ
१० वाजिनंकरसंप्राप्तंपश्यतांबालचेष्टितम् भरतप्रेरयजनान्संदेशयेनयांतिमे ११ लक्ष्मणाग्र
तिसंग्रामेयथानयतिवाजिनम् क्वचनकुरुतेक्रुद्धःसौमित्रिर्मामकंसदा १२ जैमिनिरुवाच कौ
भरतेनसमाहूताःपंचदूतामहाबलाः रामपार्श्वेक्षणादेत्यतानुवाचरघुप्रभुः १३ श्रीरामउवाच भवि
द्भालौसागसावपिलक्ष्मण लवोरोसिद्धतस्थासमरेःशस्त्रास्त्रकोविदैः १५ रयस्योमि... ...ामितःऽनघ तद्व
...र्कःप्राणान्दा... ...कमदराभ्यांतुम ...सैन्येनलवोरुद्धोतिप. अपुत्रतं
...रेःकुशम् लक्ष्मणस्यचसैन्येनलवोरुद्धोतिप ...रणेयुद्ध

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri





२२ [illegible] मा: सा [illegible] गराच्चस्मात्तयम्प्रविनिर्ययुः २३ सर्वे
निराश्र [illegible] नयशिरस्त्वेगान्मापातथरणौबलौ १६ परबालेदयायुक्तंचिन्तंकुर्वा [illegible] नीरस्यीपरिणेतारः स्वजो
नैः सहिताजायतेभुविमाधव: १७ मयानपुत्रवदनसीतावदनसन्निभम् वीक्षितंभुवि [illegible] युद्धशौंडाः महा
मोचयाम्यहम् १८ प्रष्टव्यौकस्यपुत्रौतौकिमर्थंवनचारिणौ पुत्रयोर्जननीकुत्रतत्पृष्ट्वातांसमी निर्ययुर्न
१९ जैमिनिरुवाच एवंदिशतिरामेतुदूतान्प्रतिविशांपते तावद्भग्नाः शरैर्भिन्नाः क्षतजं
घप्रवाहिणः २० लक्ष्मणस्यमहावीराराम्शरणमाययुः रामरामेतिजल्पंतः शीसंतःक्रमहद्भयम्
२१ रामरामममहाबाहोत्राहस्मान्महतोभयात् बहुलेनबलेनापिवृतःशूरःसलक्ष्मणः २२ प्रापत
काननंघोरशत्रुघ्नोयत्रमूर्च्छितः ससैनिकःक्षतोबाणैःकुशस्यपरितिष्ठति २३ कुशसायकभिन्नां
गैरुधिरापीडवाहिभिः वीरैर्नज्ञायतेकिंचित्किंशुकैःपुष्पितैरिव वज्रपातसहावीरानानाशस्त्रैः
प्रपीडिताः नजानंतिव्यथायेवैतेकुशेनविमूर्च्छिताः २५ लवेनैकेनशिशुनाहृतासावाहिनीघना
विमुखाभूद्भृतंप्राप्ताहस्त्राबालस्यचेष्टितम् २६ लक्ष्मणस्यबलाध्यक्षःपतितोभुविराघव कालजि
ह्वाभिःसार्द्धंकुशबाणैःप्रपीडितः २७ लक्ष्मणेनकृतंयुद्धंभ्रातरौवीक्षितौवने स्वमनःकृपयायुक्तं
वैरंत्यक्त्वानुजस्यतत् २८ ततःकुशंप्रत्युवाचसौमित्रिःसतवानुजः गच्छबालकमुक्तोसिकनिष्ठे
नसमंगृहम् २९ जनन्यैब्रूहिमुक्तोस्मिसामयुक्तेनकेनचित् लक्ष्मणस्यवचःश्रुत्वाकुशोलक्ष्म
णमब्रवीत् ३० त्वंगच्छराममुक्तोसिदुःखितंत्वांनयोधये नक्षमास्त्याप्यहोरामेसांप्रतंहिवि-
लोक्यते ३१ यःसानुजःप्रवृत्ततुकुशायैन्नागतःस्वयम् भीतोऽवमानसंसर्गकारकाद्राघ-
उवाच ३२ कृपाधृताल [illegible] कर्तव्यंहतव [illegible] तोयाहिलक्ष्मण प्रहराशुशरौघैर्मांपौरुषंचेद्धिभातिते ३३
लवत् ३ शिरांसिपक्वफलवत्पातनी [illegible] तेशरास्तंतदाभित्वाबालंयुद्धेतथाविधे ३४ पतिताःकाव
[illegible] णौघैर्लक्ष्मणस्यकलेवरम् ३५ समाकीर्णंत्वग्विहं
[illegible] सेनकेनापितस्माद्बालभयो



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

नयोग्यमेतत्सैन्यंस्यादगस्त्यस्येवनिर्झरः नचसिंहस्यपुरतोजंबूकाढीप्रसर्पति ५ पुण्यांभागीरथींह-
त्वापापराशिःक्षयंव्रजेत् तथात्वांसमरेसेनाहत्वाशीघ्रंविनश्यति ६ केवलंश्रोत्रियैरेवधार्यस्त्वंनच
सैनिकैः अहंहिवाहिनीवेगात्नभग्नःस्यात्कथंचन ७ उत्तिष्ठधनुरुद्यम्यबाणान्योजयमाचिरम्
अहंसैन्यमिदंसर्वंरुणध्मिनिशितैःशरैः ८ किंकरोमिधनुश्छिन्नंततःसूर्यसुदेक्षत लवोनिश्चलयादृ
ष्ट्यामनसाप्रार्थयन्धनुः ९ लवउवाच नमःसवित्रेसूर्यायपूष्णेज्योतिष्पतेनमः नमः
समस्तुरंगायनित्यंव्योमचरायच १० मेषादीनामधीशायमासिमासिनेमोनमः अयनद्वयकर्त्रेचप्र
काशायनमोऽस्तुते ११ मूकांधबधिराणांचवाग्नेत्रप्रदायच शिरोर्तिमूलकुष्ठानांनाशकायनमोऽ
स्तुते १२ नमःसुवर्णवर्णायसहस्रकिरणायच जगतामेकनेत्रायजन्मत्राणक्षयायते १३ ऋग्वेद
रूपिणेतुभ्यंनमोब्राह्मणरूपिणे यजुःसामाथर्वकर्त्रेपुराणागमकारिणे १४ गाथेतिहासकर्त्रेते
नमोब्राह्मणरूपिणे नमोविश्वस्वरूपायरुद्ररूपायतेनमः १५ विश्वस्यवांछितकरायमनोरमा-
यविश्वेश्वरायपुरुषायसदामलाय हंसायचंडघृणयेमणिकुंडलायनोमुष्याह्वेजयकरंधनुरघ
मेस्तु १६ जैमिनिरुवाच स्तोत्रेणानेनसंतुष्टोरविर्दिव्यंशरासनम् ददौलवायसौरं
चपठतांश्रेयउत्तमम् १७ सुवर्णपट्टैरुचिरैर्निबद्धंसगुणंदृढम् धनुःप्राप्यमहाबाहुर्लवःकुशम
थाब्रवीत् १८ लवउवाच उपदिष्टंहियत्स्तोत्रंमुनिनागुरुणामम सौरंत-
न्नर्पितंभ्रातस्तस्माल्लब्धंमयाधनुः १९ यद्यदस्त्रमयंवस्तुतदहंप्राप्तवान्महत् इत्येवमु-
क्ते ... समातेमहाबलौ २० दग्धुंसैन्याटवींक्रितौप्राप्तौवायुविभावसू नौप्रतिमोच...
...हितद्वयंयन्तौ ...पालिताम् २१ वर्षमाणौशरान्घोरान्जीमूताविवपर्वते आ... ...नतःनघ तद्
हिशीघ्रंविभेद्गनान्तमेन ...नाकमंदराभ्यांतुमथ्यमानेइवार्णवे संघट्टनान्तयोरे... ...य्यतेकिंमु अपुत्रत्वं
दारुणंहिकःप्राणान्दपितान्नृप ...नेशरैःकुशम् लक्ष्मणस्यचसैन्येनलवोरुद्धोतिपि. ...ोऽहंमहारण्येषु

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



…कास्ताहिशतंशतेन गजेगजेतन्नरथादशासन्नरस्तेनयेयुः २३ सर्वे
निराश्र… …नानुय… …ताहितस्यावेवक्रमीणांशतकेनरुद्धः ततोनिजघ्नुःद्वीपरिणेतारः स्वजो
रैस्सहिताजायतेस्फीः २६ गदासिशक्त्यृष्टिपरश्वधैश्चकुंतैस्तथासंभ्रमवाजियुक्ताः समयुद्धशौंडाः प्रहा
रै… …कैर्नतेपरिवव्रुरेनम् २७ द्विषोनिजघ्नेनिशितैःक्षुरप्रैःशिरांसिभूमावकिरत्स्फुरंति
लवोलवेनाहवकर्मकुर्वन्ननादकल्पांतकरोयथायमः २८ शतंशतेनविव्याधद्विशतौद्विशतेनच सह
स्रार्द्धंतदर्द्धेनसहस्त्रमयुतेनच २९ वीराणामहनत्क्रुद्धःप्रयुतंप्रयुतेनच जैमिनिरुवाच
चत्वारिंशद्रथीहत्वागजानांसिंहविक्रमः ३० शरैःसंभिन्नसर्वांगोदिशःसर्वाव्यलोकयत् इतःसै
न्यमितःसैन्यंरथवारणसंकुलम् ३१ लसल्लवद्रुमप्रभाभिश्चश्यामीभूतगजैरपि ददर्शघोरंसलवो
नकुशंपृष्ठतस्तथा ३२ तदाद्ध्योनिरंबालोभ्रातामेक्वगतःकुशः इतिचिंतयतस्तस्यलवस्यधनु
रुत्तमम् जहाररासः क्रुद्धोमातुलोलवणस्ययः रुधिराक्षइतिख्यातोरामंशरणमागतः ३४
लवोजवात्तत्ययंतधनुरादायराक्षसम् तिष्ठतिष्ठेतिचोवाचमत्तोजीवन्क्वयास्यसि ३५ इत्येवमु-
क्त्वावचनंचक्रंजग्राहपाणिना जनन्याश्चरणौचित्तेचिंतयित्वामहाभुजः ३६ सचक्रपाणिस्त्वरितो-
लवोगगनमाश्रितः गगनस्थंलवंहत्वायोधाविभ्युःपतेदिति ३७ ततश्चापेषुरुचिरांच्छरांस्तेयुयुजुर्भया
त् केचिद्धनुश्चचर्माणिसहदानिस्वमूर्द्धसु ३८ अस्मानुपरिवीरोसौपतिष्यतिनसंशयः इतिकृत्वा
मतिंकेचित्स्यंदनस्याधआगमन् ३९ बाणनिर्भिन्नवर्माणोवारणाक्रविशीरते तेषामुदरमध्यस्थाः
केचिच्छन्नामहारथाः ४० एवंसंभीतावीरायेतेप्येवंचक्रिरेतदा अवशिष्टामहावीरानिर्यातास्तुदशैव
हि ४१ राज्ञोदशरथस्यासीन्मंत्रीसुज्ञोहितत्सुताः जितश्चमोधार्मिकश्चसकेतुःशत्रुसूदनः ४२ चंद्रोमदःश
लःकालोमल्लःसिंहश्चतेदश विव्यधुःसायकैस्तीक्ष्णैर्लवंरवेचक्रपाणिनम् ४३ दशाभिर्दशभिर्बाणैश्चि
च्छिदुश्चक्रमुच्छ्रिताः छिन्नचक्रोलवःशीघ्रंजग्राहपरिघंभुवि ४४ जघानमंत्रिपुत्रांस्तान्परिघेणहसन्निव



…नया

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

विज्ञप्तिकालेत्वत्पौरैर्नमस्कार्योमहीपतिः ८ राजोवाच हास्यदेयंसमाकर्ण्यतद्वाच्यमविशंकया
कुर्वेहंसकलंकार्यंजीवितेनधनेनच ९ ब्राह्मणउवाच शृणुराजन्प्रवक्ष्यामियदर्थमहमा
गतः रम्याद्धर्मपुरात्कर्तुंविवाहंस्वसुतस्यहि १० कृष्णशर्माद्विजस्तत्रकन्यायुक्तःपुरोहितःवि
[illegible]मणोन्यशीलायमत्वादास्यतिकन्यकां ११ आयामिपुत्रसहितोयावत्तेनगरंप्रति तावन्
[illegible]गवनेघोरेसिंहःकोपसमन्वितः १२ जग्राहपुत्रंतरुणंपश्यतोममपार्थिव ततोमयास्य
पुत्रस्यमोक्षणेचोद्यमःकृतः १३ स्मृतोनृसिंहस्तत्राशुनागतःस्मरणान्मम दुःखितंमांसवैसिं
हःप्रत्युवाचहसन्निव १४ मनुष्यवाक्पीडयन्मेपुत्रगात्रंतदाननैः दंष्ट्राभिर्भीषणाभिश्चतर्जन्
यन्नंगुलेनमां १५ सिंहउवाच वृथाश्रमंहिविप्रेन्द्रपुत्रंप्रतिकरिष्यसि मयाग्रस्तंहिकालेननान्य
स्तारयितुंक्षमः १६ गच्छशिष्येणसहितःस्वगृहंमाविचारय हिंस्राणांपुरतोवासोनसुखायोपजा
यते १७ अन्यंजनयपुत्रंत्वंयस्तेलोकप्रदोभवेत् अपुत्रस्यपरोलोकोनास्तिवेदेनभाषितं १८ ब्रा
ह्मणउवाच मांभक्षयित्वासिंहत्वंमुंचपुत्रंहिलोकदं वृद्धस्याल्पायुषोव्यर्थंजीवितंपुत्रवर्जितं १९
सिंहउवाच वयंतुमृत्युनाग्रस्तंघातयामोजनंक्वचित् साहाय्यकारकाःसर्वेसर्पहिंस्रजला
दिकाः २० नवायुष्यंहिबहुलंगतायुस्तवपुत्रकः तस्मात्कृच्छ्रमयाप्राप्तःकिमिदंक्रियतेत्व
या २१ ब्राह्मणउवाच केनोपायेनदानेनतपसावाप्रमुंचसि तदाप्रोक्तंकेसरिणात्वत्तःकिं
प्राप्यैतन्नृप २२ मयूरध्वजउवाच विप्रेन्द्रसामकेराष्ट्रेक्षुद्रःसिंहोनविद्यते नारसिंहंविनाको
ऽन्यस्तवपुत्रंप्रधारयेत् २३ ब्राह्मणउवाच सिंहेनप्रार्थितंकिंचित्त्वत्तोयन्नृपसत्तम भवि
ष्यतिहितद्देयंयत्त्वांयाचतिकेसरी २४ राजोवाच किंप्रार्थितंकेसरिणामत्तोदास्यामितेऽनघ तद्व
दिशीघ्रंविप्रेन्द्रनानृतंममभाषितं २५ ब्राह्मणउवाच ग्रहास्यसिकथंतत्तुमयायत्प्रार्थ्यतेकिमु अपुत्रतो
दारुणंहिकःप्राणान्दयितान्नृप २६ सिंहेनप्रार्थितंदाताभवांश्चेच्छृणुदारुणं तेनोक्तोऽहंमहारण्येशु

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



रीरार्थंसमानय २७ मयूरकेतोः पुत्रंततोमुंचामिभूसुर त्वदीयंतपसादग्धं हृत्थंगात्रंनरोचते २८ ना
नाविधफलैःपुष्टंदिव्यदुग्धरसैर्वपुः मयूरकेतोर्निर्भिन्नंसुप्रियंममदीयतां २९ यावच्चनाचयेगात्रंताद्दृशं
तावदेवहि पुत्रंनतेभक्षयेहंसत्यमेतद्ददामिते ३० ब्राह्मणउवाच किमर्थंस्वशरीरंहिराजाभेत्स्यतिसुंद
रं १राथैनैवगच्छामिमृगाधिपनराधिप ३१ सिंहेनोक्तंपुनरपिगच्छविप्रनृपंप्रति दृष्टोदधीचिरस्थीनि
कवचंभानुजोयथा ३२ तथाप्रदास्यतिवपुर्विप्रार्थेनान्यथाभवेत् यशस्विनांशरीरस्यप्रीतिर्नेमहतीक्व
चित् ३३ रणमध्येपातनीयंद्विजार्थेबाहुजैर्वपुः त्वंविप्रसुतहीनोऽसिततोयाहितदंतिकं ३४ तंप्रार्थयम
हीपालंगत्वाशोकविनाशनं बहवोजनितास्तेनपुत्राराज्यंचिरंकृतं ३५ त्वांवीक्ष्यकृपयायुक्तोभविष्यतिन
संशयः अर्थिनांप्रार्थ्यतेसर्वंजनोयच्छतुवानवा ३६ ब्राह्मणउवाच रथस्थेनवनेप्रोक्तंसिंहेनाहंप्रचोदितः स
शिष्यस्त्वद्गृहंप्राप्तःपुत्रशोकातुरोनृप ३७ केनाप्युपायेनवनेसिंहात्पुत्रंसमानय अदृष्टःकेसरीजातःकथ
यन्दारुणंवचः ३८ शरीरार्धंविनातस्यनागंतव्यंमहीपते आगतस्यनतेपुत्रंविनागात्रंप्रमोचये ३९ इतिते
नयदाप्रोक्तंतदात्वामहमागतः निवेद्यदुःखंभूपालस्यातव्यंदुर्बलैर्जनैः ४० रामचंद्रेणवीरेणब्राह्मणस्यमृतःसु
तः ब्रह्मचर्यव्रतकरःपुरानीतःस्वपौरुषात् ४१ नृपाशयाहंपुत्रार्थीभवंतंसमुपागतः रामतुल्यंहिसत्वेनमत्वा
धैर्येणपार्थिव ४२ नृपउवाच तिष्ठविप्रददास्यामिमंडपेस्वंकलेवरं सर्वेषामत्रविप्राणामग्रेसाधूदितंत्वया
४३ जैमिनिरुवाच एवमुक्त्वावचोराजापुत्रंराज्येन्यवेशयत् सुस्नातोजाह्नवीतोयैःशालिग्रामशिलाजलैः ४४ तुलसी
स्रजामालांकंठेकृत्वाहसन्निव शंखचक्रांकितंगात्रंकृत्वाराजामुदान्वितः ४५ सभामंडपमागत्यसर्वान्विप्रानुवाचसः
मर्तिध्वजउवाच एनंकृष्णंविप्ररूपंपुत्रार्थंमांसमागतम् ४६ अर्चयामिस्वदेहार्धंयथापुत्रयुतोभवेत् पश्यंतुकौतुकं
सर्वेब्राह्मणायज्ञवाटके ४७ वार्धकीकाःसमायांतुकरपत्रसमन्विताः द्वौस्तंभौरोपयंत्वत्रभिंदंतुममसस्तकं ४८ येषां
प्रियोऽहंसततंतैर्नवाच्यंहिदूषणं ४९ इत्याश्वमेधिकेपर्वणिजैमिनीयेमयूरध्वजदेहार्धदाननिश्चयोनामपंचचत्वा
रिंशोऽध्यायः ४५ जैमिनिरुवाच तस्यवाक्यंहितंश्रुत्वाप्रधानाश्चद्विजास्तदा कंपिताश्चप्रियापुत्राबभूवुर्नृपसत्तम १।



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

प्रभुर्वंतःसकरुणंकुतःकालनिभोहिद्विजः आगतःप्राणहरणोराज्ञोऽस्माकंहिनिर्दयः २ बहवोयाचकादृष्टास्त्वी
दृशोनकदाचन राज्ञोदेहंयाचयेत्कोनिर्दयोनिरपत्रपः ३ सिंहोहिघातुकोलोकेप्रसिद्धोमांसभक्षकः अयंत
नुषोजात्याब्राह्मणोज्ञानवांस्तथा ४ स्वार्थनिष्ठःकथंजातोभूत्वाब्राह्मणजातिजः अस्माककउपायो
वियत्नद्भविष्यति ५ अवश्यंभाविभावानांप्रतीकारोनविद्यते सत्यवादीप्रियातिथ्यःकथंवायोम
हीपतिः ६ किमयंविप्ररूपेणपुराप्राप्तोयथाबलिं वामनोयज्ञसमयेतथाविप्रोहरिर्हिद्विजं ७ एवंवदंत
स्तेसर्वेतदाराज्ञानिवारिताः ततोनृपोहर्षितोऽभूद्दत्वादानान्यनेकशः ८ तदायातावार्धकीकाःस्तंभौद्वौ
रोपितौहितैः तिर्यक्काष्ठकृतंचैकंदृढंबद्धंचरज्जुभिः ९ आदिदेशतदाराजाकरपत्रंस्वमस्तके धर्तुंस्व
यंहर्षयुतःसर्वेषामेवपश्यतां १० क्षालयित्वाविप्रपादौराजावचनमब्रवीत् शरीरार्द्धेनगोविंदःप्रीयतां
यज्ञनायकः ११ अस्मत्कुलप्रसूतानांनराणांशुभमिच्छतां सभार्यविप्रकार्येहिदत्तांयौवनंधनं १२
गृहाणविप्रभिन्नंमेशरीरार्द्धंनृकेसरी संतोषंपरमंयातुभिनद्धिस्वकलेवरं १३ रेरेमल्लाप्रयात्नतः
कर्षंतुस्वबलान्मम गात्रंबद्धंपट्टगुणैर्माचिरंयातुभूसुरः १४ धन्योऽस्मिन्भूतलेजातोब्राह्मणेनामुं
नाकृतः शृण्वंतुलोकाःसकलाभाषितंममसादरं १५ परोपकृतयेयेषांशरीरंवित्तसंग्रहः यातिय
तस्थितंश्रोच्यमुभयंदानवर्जितं १६ तस्मात्सहर्षःकर्तव्योमानिरीक्ष्यसभासदैः जैमिनिरुवाच ।
हाहाभूतंतदाराष्ट्रंवीक्ष्यराजानमेवच १७ क्रंदमानंहिसंजातंकुररीगणसन्निभं महिषीतस्यतत्र
पतेःसमागत्याब्रवीन्नृपं १८ विप्रस्यपुरतोदृष्टारम्याराजन्कुमुद्वती कुमुद्वत्युवाच राजन्विप्राय
देहार्द्धंत्वयादेयंमयाश्रुतं १९ तवार्द्धगात्रंभार्यास्मिमांदत्वासत्यवाग्भव सजीवंदीयतेदानंभिन्नं
तिगतजीविनं २० परेणभिन्नपंचास्यानगृह्णातिमतिर्मम तुर्याश्चोयदिदेयाहिभवेन्मग्नंहितेवपुः
२१ अर्द्धंप्रार्थयतेनेसिंहःस्त्रीरूपंविद्धिमारिषं प्राणनाथस्यपुरतोयानारीमृत्युमाव्रजेत् २२ उत्तमां
गतिमाप्नोतिनात्रकार्याविचारणा तस्यास्तद्वचनंश्रुत्वाविप्रःप्रोवाचसत्वरः २३ एकाग्रमनसंज्ञात्वारा

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri


ज्ञानवाक्यकोविदः विप्रउवाच सिंहेनकथितंराजन्वामांगंस्त्रीमहीपते: २४ दक्षिणांगंमदेयंमेवा
मांगंनीयतेकथं शरीरदक्षिणांगंमेदातुंसिंहायचार्हसि २५ नदास्यसिकदाचित्त्वंनिराशोयामितंप्रति
तेनैवप्रेषितोराजन्सामीप्यंतवसुव्रत २६ गत्वातंकथयिष्यामिपुत्रंभक्षयथासुखं एवंविप्रेवदतिस्थि
तेषुतांवैसभासदां २७ पश्यतांकौतुकंचैवराजपुत्रोऽतिहर्षितः तंब्राह्मणंशिष्ययुतंगिराकोमलया
तदा २८ संपादयन्पितुःकीर्तिमुवाचपरयामुदा ताम्रध्वजउवाच योवैपितासपुत्राहिश्रुतिरेषासना
तनी २९ ब्राह्मणार्थेहिमत्पित्राशरीरार्धंसमर्पितं शरीरार्धंसमर्थ्यंहिपितुर्भवतिपुत्रकः ३० प्रसन्न
स्तरुणंवीक्ष्यमांसपुष्टंमृगाधिपः भविष्यतिमहाब्रह्मन्पुत्रस्यचमहद्यशः ३१ भीष्मरामादिभिर्लब्धं
पितृवाक्यकरैर्यशः ब्राह्मणउवाच सत्यंत्वंभाषसेपुत्रवचःकेसरिणःशृणु ३२ पुत्रेणभार्ययाभि
न्नंमयूरध्वजमस्तकं द्विधाजातंशरीरार्धंदक्षिणांगंत्वमानय ३३ कथंत्वदन्यथाकर्तुंशक्यतेमम
द्विधेनतु जैमिनिरुवाच ततःसन्नृपशार्दूलोवारयित्वानिजांसुतं ३४ तयोःकरेददौराजाकरपत्रमु
दान्वितः स्त्रीपुत्रयोःपुरस्तस्यब्राह्मणस्यमहात्मनः ३५ जपन्केशवरामेतिनृसिंहेतिचधैर्यतः द
दृशुस्तंतथाभूतंसर्वेदेवाःसवासवाः ३६ यदाधृतंमस्तकेस्य करपत्रंमहात्मना महतान्वाभवद्ध्वनि
दुःखिताःपौरजाजनाः ३७ भार्याजग्राहतद्वाक्यात्करपत्रंचपुत्रकः गायंतीरामरामेतिब्राह्मणंवा
क्यमब्रवीत् ३८ सर्वेषांशृण्वतांतत्रभिन्नद्विस्वपतिर्द्विज नृसिंहेनपुराभिन्नस्तंभोयद्वत्सुकोपिना
३९ विदारितौदैत्यनाथस्तद्वन्नाथंमहामतिं नृपउवाच करपत्रंकरस्थंतेनिरीक्ष्यामिताद्दशं केतकी
कुलेपत्रंशरीरेसुखदंयथा त्वंभिंधिकिंमेनिःशंकःकरजैरिवसंगमं ४१ यथातत्रनमेपीडाजायतेचनरे
[illegible]थं तथाद्यकरपत्रस्यदलैःकमलकोमलैः ४२ ततःसातस्यभूपस्यमस्तकंपुत्रसंयुता बिभेदकरपत्रेण
समक्षंकृष्णपार्थयोः ४३ हाहाकारोमहानासीद्भिन्नेकेजनमेजय वामनेत्रेजलंप्रासंतदाविप्रोदुरासदः ४४ प्र
उवाचमहीपालंभिन्नंभ्रमितिनारकं नगृहीष्यामितेगात्रंरुदन्यत्त्वसिमारिष ४५ अभावोपहृतंदानंनगृह्णंतिविपश्चितः



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj, Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

विनापुत्रेणमेस्वर्गोरुद्दस्तिष्ठतितिष्ठतु ४६ सिंहोयातुयथास्थानेगृहीत्वाममबालकं हृदित्वावाम
नेत्रेणराजादेहार्द्धमप्यय ४७ ददामितदहंविप्रः कथंगृण्हामिसत्तमः एतावदुक्त्वावचनंपरित्य
...यमहीपतिः ४८ येयंयापद्मयंतांतंषापार्थयुक्तोजनार्दनः ग छन्नब्राह्मणवीक्ष्यपातिंप्राहकुमुद्वती
४९ गृहीत्वामस्तकंभिन्नंकराभ्यांसुमुखीसती कुमुद्वत्युवाच सत्यव्रतमहाबुद्धेवदान्यानांशि
...रमणे ५० ब्राह्मणस्त्वामयाभिन्नंपरित्यज्याद्यगच्छति नाथवारयगच्छंतंविप्रंदद्याद्धयाचकं
च मोहितं गृहीत्वाविफलातवकीर्तिर्भविष्यति नृपउवाच भिन्नंत्वयाधृतंभद्रेमस्तकंमांमकंपुनः ५२
तः ... नेतान्नवीमिविप्रेंद्रव्रजतंकाननेगृहात् मागच्छमुनिशार्दूलश्रुत्वायाहिवचोमम ५३ वामांगलो
चनेप्रातंयस्मान्नोयंद्विजोत्तम दक्षिणांगंब्राह्मणार्थंमदीयंसाधुसंगतं ५४ वामांगपतितंभूमौवृथा
यातोनिरोदितिं नव्यथाकरपत्राग्नेतीक्ष्णाद्भवतिनादृशी ५५ यादृशीविप्रविमुखाद्यामांगाद्देहजा
यते इतितस्यवचःश्रुत्वाप्रसन्नःपरमेश्वरः ५६ आत्मानंदर्शयामासस्वरूपंभूपसन्निधौ समालिंग्या
ब्रवीद्वीरं कृष्णःकमललोचनः ५७ धन्योसिनृपशार्दूलमयूरध्वजसुव्रत परीक्षितोसिबहुधाम
यात्वंपाडवेनच ५८ यज्ञकुरुमहाबाहोसपत्नीकःसपुत्रकः ताम्रध्वजेनसंग्रामेतोषितोतवसूनुना
५९ मूर्छितौसैन्यसहितौकृतौवीरप्रमाथिनौ मानिरीक्ष्यकुतोदुःखंजायतेप्राणिनामिह ६० देहार्द्धं
हित्वयादत्तंमहाकोनमहात्मना तवयज्ञेभविष्यामिकर्मकर्तामहामते ६१ यस्मान्मत्कृपराधीनौजि
तौस्मिनवसूनुना युधिष्ठिरस्यतुरगंगृहाणत्वमपिस्फुटं ६२ द्विहयोसंमृयहुत्वाकीर्तिंप्राप्नुहिशोभनां की
दृशास्तवगात्रस्यभेदोयममपश्यतः ६३ मयूरध्वजउवाच धामतंपरमंविष्णोपदंचबहलंप्रभो भिन्नंकृत्वा
शरीरंमेप्रविष्टंयद्बहिःस्थितं ६४ श्रीपतेवासुदेवाद्यधन्योहंतेनकृतःप्रभो किंमेयज्ञेनगोविंदयदितुष्टोसिकेश
व ६५ दृष्टस्त्वयिजगन्नाथेकीर्तिर्नेनमितश्रुते यज्ञकोटिकृतंपुण्यंभवतीतिनसंशयः ६६ तथाप्युक्तंकर्मकर्ता
तथाकुरुजनार्दन तुरंगौमांचमत्पुत्रान्मत्स्त्रियांचमहाजनं ६७ गृहीत्वायज्ञकर्तृश्चयज्ञोपकरणानिच सस

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



रेण महाविष्णोर्हृदयं त्वं निवेशय ६८ भवंतं प्राप्य गोविंद मयाचेत्क्रियते क्रतुः अहं सिध्यंति तेमंत्राः पठिता येद्विजान्मैः ६९ महांतमग्निमुत्सृज्य हिमेन परिपीडितः कःसेवेत नरो मूढो विस्फुलिंगान्जनार्दन ७० तृषितोजान्हवीतोयं हित्वानीहारमाव्रजेत् मूढधीर्वाजिनोप्राप्य त्वामवज्ञाय माधव ७१ यजतेहयमेधाभ्यां तदश्वारविसूनुना पुत्रकोमेकृष्णपार्थैत्य स्कायुद्धेसमागतः ७२ भाग्याद्यान्मयादृष्टौ नरनारायणाविमौ नमस्तेपुंडरीकाक्ष ब्रह्मण्येगुरवेनमः ७३ ब्रह्मगोलोकसाहस्रैः फलितायनमोनमः हंत्रेगोत्रे नमस्तेःस्तु सृष्टिकर्त्रेनमीढुषे ७४ अनंताय सुपूर्णाय वेदविश्वासकारिणे श्रीधराय नमोनाथ शेषमंचकशायिने ७५ लवणघ्नायशांताय नमस्तेकलितायच ज्ञानाय ज्ञानगम्याय नमः कालजितायच ७६ नमोदृश्याय वेद्याय नमः पारंपरायच जैमिनिरुवाच एवंस्तुतस्तदातेन नविश्वात्मा मधुसूदनः ७७ मम भ्राता भवत्कृष्णो भक्तिं पार्थाय दर्शयन् चिरांकेचस्थितस्तत्र भक्त्यातुष्टो जगत्प्रभुः ७८ केशवेन समं पश्चात्ससयो वाजिपालने दत्ताकृष्णकरे सर्वं विनंजीवितमेवच सुहृद्भिः सहितोराजा पार्थमालिंग्य चाग्रतः ७९ इत्याश्वमेधिके पर्वणि जैमिनीये मयूरध्वजविजयवर्णनं नाम षट्चत्वारिंशोऽध्यायः ४६

जैमिनिरुवाच तुरंगमोगतोराजन्पुरे वैवीरवर्मणः सर्वसैन्ययुतःकृष्णः पालयन्नन्वगान्मुदा १ धर्मश्च यदोयत्र तेन भूपतिना कृतः जामाता यस्य यद्धामनो राष्ट्रे तिष्ठति मूर्तिमान् २ सारस्वतपुरे रम्ये निवसंति धार्मिकाः धर्मार्थकाममोक्षाणां पारगायत्र मानवाः ३ स्वप्नेपि कुत्सिते मार्गे न गच्छंति कदाचन अर्जुनं कृष्णसहितं रक्षंतं वरवाजिनौ ४ सुश्राव वीरवर्मासौ राष्ट्रे बहुलसेवकैः आदिदेश ततोराजा ग्रहणार्थं महाबलान् ५ तुरगोमामकेराष्ट्रे पांडवस्य महात्मनः व्यचरेत्तं चिरं रम्ये पौरुषेणाहरंतु तौ ६ नृपस्य वचनं श्रुत्वा निर्गतं विविधं बलं महावीराः पंचधीरा ग्रहणार्थं विनिर्गताः ७ सुभाहुः सुरभोर्लोलः कुवलः सरलश्चते पुत्रा दिव्यरथारूढा धन्विनो वीरवर्मणः ८ तेमाप्ताः पांडवबलं तृणीकृत्य रणस्थितान् गृहीत्वा वाजिनौ रोषात्समयाता भूपसन्निधौ ९ यावद्गच्छंति ते वीरा नृपं प्रति महाबलाः बभ्रुवाहनराजेंद्र आहूतास्तावदेव हि १० शं



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

स्वनादेनवीरांस्तान्कृत्वाबधिरकर्णकान् पार्थपुत्रस्तदारोपाद्य [illegible] च्छन्नुवाहिनीम् ११ बभ्रुवाहोम
[illegible] रैःकनकचित्रितैः ततोयुद्धंसमभवत्तुमुलंभूपदारुणं १२ केशाकेशिरणेःतीवमुष्टामुष्टिनस्त
[illegible] णमेवाग्रेजग्मुर्वीरामदोत्कटाः १३ रथागजैःसंगतास्तेगजाःकुत्रापिवाजिभिः विपरी
[illegible] तरद्वक्रीडनसन्निभं १४ बभ्रुवाहनवीरेणहन्यमानंबलंमहत् संचुकोचतथाभूतमम्भो
चमोहितंयथा १५ संयमिन्याःपतिस्तावत्समागत्यनराधिपं समुत्कृष्टपार्थबलंघातयामासरोषि
तः १६ धर्मराजेनपार्थस्यपातितंविविधंबलं हतमर्व [illegible] त्युग्रंश्वशुरायेनराधिप १७ पार्थोवीक्ष्य
हतंसैन्यंजामात्राथवीरवर्मणः उवाचकेशवंदेवंविस्मयन्निवभारत १८ कोसौदेवोहृषीकेशानररूपेण
मेबलं तीक्ष्णैःशरैःपातयन्तंसमस्तंतवमाधव १९ वासुदेवउवाच यमंविद्धिमहाबाहोपुरतःस्थितमाहवे
प्रार्थितंचैवकन्यार्थंस्तपुरेवीरवर्मणा २० अर्जुनउवाच किमेतत्कृष्णकथितंयमोनृपसुतापतिः कथ
मेनत्संगतंहिनत्सर्वंवदकेशव २१ कृष्णउवाच मालिनीनामकन्यास्यसंजातावीरवर्मणः मानुषंनव
रंपार्थवृणुतेभुविमानिनी २२ यदाष्टवर्षापुरागेहेपित्रास्तामालिनीशुभा कस्तेवरोमयाकार्योमानुषंनेच्छ
सिपरि २३ मालिन्युवाच धर्मराजायमंतातेदहित्वनापरोवरः अन्येमृतानरायांतियमस्यसदनं
प्रति २४ धर्मराजशरीरंहिप्राप्याहंकीर्तिमाप्नुयां कृष्णाग्रामान्जनान्यास्यस्वगुणैःपतितोपकैः २५
नरस्यपाणिग्रहणंनथर्मंक्रियतेमया पश्चाद्भर्गीशरीरंमेयदिस्पृष्टंभविष्यति २६ द्वितीयस्यजनस्या
हंनाप्नुयांसंगतिंयथा तथानानाविधानव्याधर्मराजोहिमेवरः २७ यानारीपुरुषंप्राप्यपितृदत्तंभुवि
स्थिता वंचयित्वानिजंकांतमपरंयातिमोहिता २८ तानुवैवस्वतोराजानरकेपातयत्यसौ नमेवाहो
वरंकृत्वानिनिर्देशोस्थीयतेमया २९ नत्रमांधर्मराजोयंपालयिष्यतिपापतः सुगुप्तंसर्वदातातनव
यंभविष्यति ३० प्राकृतायसुतादत्ताभवेत्पुण्यप्रदायिनी किंतुधर्मायमूर्तायदत्ताःहंतुशिवप्रदा ३१ एवं
विधंमयातातकर्त्तव्यंहृदिचिंतितं नानाविधानिकार्याणिधर्मगुप्तानियानिमे तदामनोरथोरम्योभवि

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



ष्यतिहिमामकः ३३ इत्याश्वमेधिकेपर्वणिजैमिनीयेवीरवर्मायुद्धवर्णनंनामसप्तचत्वारिंशोऽध्यायः ४७ जैमिनि
रुवाच एवंविधंसुतावाक्यंवीरवर्मानिशम्यतत् यमसूक्तैर्दिवारात्रंस्तयमंस्तौतिनित्यशः १ मालिनीविधिवद्दे
वसमाराधनतत्परा बभूवयौवनंप्राप्यध्यानभावनसाजहौ २ नारदेनतदाज्ञातंचिंतितंतृपनेःसुता ईदृशं
कुरुतेभावंनैनांवेत्तियमःस्वयं ३ तंगत्वाकथयिष्यामिमामवमस्याःसुशोभनं धर्मकार्यंप्रकुर्वाणायमभीत्यैदिने
दिने ४ तद्दिदिस्थितंमनुष्याणांविदंस्त्वेवसुचेष्टितं ममवर्तीकथंमंदोमालिन्याःफलदूषकः ५ जैमिनिरुवाच
ततोजगामदेवर्षिर्यमस्यसदनंप्रति न्यवेदयत्स्त्रियातस्मैमालिनीराजकन्यकां ६ धर्मराजनरेंद्रस्यमा
लिनींत्वामनुव्रतां सत्यव्रताधर्मरतापुण्यसर्वस्वदायिनी ७ तामेवनमस्यहंवेत्तितांत्वंवरयमाचिरं प्राप्तां
सफलांसंतःकुर्वंस्येवहिनेतरे ८ मनुष्यवेषमास्थायस्वभृत्यैःसहितोव्रज सारस्वतेपुरेरम्येपालितेवीरवर्मणा
९ नतुष्यदेयत्रनृपागतानंकाश्वमानवाः पुरीचसातयाधन्याभविष्यतिमतिर्मम १० श्रीवासुदेवउवाच ना
रदंप्रेरयामासपुरेसारस्वतेयमः वैशाखेमासिशुक्लेवैपक्षेतांवरयाम्यहं ११ इत्युक्तोनारदस्तत्रययौवीरव
र्मकं कथयामासवृत्तांतंयमेनोक्तंसुमंगलं १२ राजाकन्याविवाहंतुकर्तुकामोव्यवस्थितः यमोपिनायका
नांतुशतमष्टोत्तरंमुदा १३ आदिदेशमहाकायान्महाबलपराक्रमान् महावीरंनिजंचैवतेषांमध्येपुरस्कृतं
१४ स्वयंप्रधानरोगाणांनायकंवाक्यमब्रवीत् शेषंहिब्रह्महत्यायाःस्वरधातुविनाशकं १५ यमउवाच यस्य
निवाहेरम्येमेस्वभृत्यैःपरिवारितः आमंत्रितःसमायाहिभुविचित्रपुरंप्रति १६ यक्ष्मोवाच कथंसमागमो
नृपस्यतस्मिन्नापूर्वभविष्यति विप्रभिषाश्वनेलाकाराजापिद्विजसेवकः १७ विप्राणांपठतांघोरोध्वनिर्धूमस्य
नेहकृष्णसो[illegible]त्रेष्वात्रयोर्दुःखंकारिष्यतिनसंशयः १८ ममहंपुत्रकंसृष्ट्वाप्रहृतादंसमूत्रनाशकं बहुकालनजन्तू
[illegible]बलान् [illegible]नंभुवि १९ विषूचिकायास्त्वधिकोमांहिमाकेनलभ्यते क्षणेनमानुषंहंतितदासोतेरविनंद
[illegible] २० भ्रातुःस्थानंनपश्यामिपांडोरमिततेजसः भ्रातुर्भार्याविशालाक्षीशोफाकर्ष्मीपरंजने २१ तयासह
सुतस्तेनपांडुनासजलोदरः जनितःस्वगुणैस्तुल्यस्तंकुत्रविनिवेशये २२ राजाधर्मपरोनित्यंशुचिश्चैवमहा



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

जनः यत्रजातोभानुपुत्रतत्राहंकिंशरीरवान् २३ कोहंशोच्यतरोनाथव्रणानांपुरतःस्थितः त्वयासुमा
[illegible]हि परमाणुनिभः प्रभो २४ एतेषांपरमंतेजोभूपतिंहंतिपौरुषान् गुरुस्त्रीसंगमरतान्निमग्नान्
[illegible]धेयथ [illegible] २५ व्रणस्यबहुरूपाणिशतमष्टोत्तरंविभो विचर्चिकाप्रियायस्यपुत्रश्चास्यभगंदरः
[illegible]गामिनोशिश्नमूलेकिलभगोभवेत् गुरूणांस्तनशास्तृणांछायाक्रापिनमानवाः २७ स्पर्श
[illegible]र्मेनिरतावीरवर्मापितादराः एतस्यस्फोटराजस्यनिवासस्तत्रनेष्यते २८ त्रयोदशविधश्चायंज्व
रराट्सान्निपातिकः गुरुस्तुशंभुजनितः कृतःस्यास्यतितद्दृढ २९ अतिसारश्चवीरोऽसौनायकस्तेमहा
बलः प्रियासंग्रहणीयस्यपुत्रोध्मानश्चभासुरः ३० अरोचकःक्रोधनश्चपुत्रःपरमपातकः एतैर्दत्तानि
चासंक्रमास्यतेनाथतद्दृढ ३१ शतानित्रीणिशूलानांतानिकानिमहात्मना गमिष्यंतिलयंतत्रस्थानहीं
नानिमारिष ३२ हिक्काश्वासादयश्चैतेकासकुष्ठामहाबलाः उपरिस्थावायुभूताभ्रमितुनस्समाःपुरे ३३
धनुर्वातादयोवाताःकर्णशूलोपिभासुरः नेत्ररोगामहाकायामुखरोगाश्चपातकाः ३४ वाल्मीकंगंड
मालाचतथाऽपस्मारएवच बालकोडमरूरौद्रोविस्तीर्णान्वशिरोव्यथा ३५ एतेऽस्यतमारोगास्तथाऽन्येबह
वोयम त्वयाज्ञमानगच्छंतिपुरेकस्मान्महीपते ३६ यमउवाच भवंतोविविधाकारामहारोगामहाबलाः
स्वरूपेणनृपंयांतुदिव्यालंकारमंडिताः ३७ यथाममपुरेवासःक्रियतेवचनंतथा सर्वैरपिनृपस्यास्यक
तव्यंवीरवर्मणः ३८ येजीवापापसंयुक्तास्तेपश्यंतुनिपातनान् रोगान्भयानकान्भूमेरश्मान्सुकृतकारि
णः ३९ मांचपश्यंतिधर्मिष्ठाधर्मरूपंनचेतरे कालानलशरीरंहिवीक्ष्यतेपापकारिणः ४० ब्रह्महत्या
कृतायेनप्राणिनागतबुद्धिना ननिस्तीर्णाब्रह्महत्यागलकुष्ठविशेषतः ४१ तस्यगात्रेरोगराजस्यानंतेनात्र
संशयः त्वयाय्स्माजनःकुर्याद्यदिज्ञाप्यहितांकर ४२ महारुद्रंसहोमंचदानंविप्राययच्छति सुवर्णपुरुषंनिष्के
श्चतुर्विंशतिभिःकृतं ४३ ततःपरंतस्यगात्रेस्यन्यतांसर्वदात्वया कृतपुण्यस्यपुरतोभूत्वावहतेनतव ४४ स्वर्यानु
पि लहीनश्चसोमवारेसमाश्रयेत् गौतमींसागरस्थांचेत्स्नानार्थंमासमात्रकं ४५ स्नातमात्रंजनंदृष्ट्वानापीडय

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



पतिष्यसि इयंचतेत्रियादेवीपातनीतत्सणान्नृणां ४६ विषूचिकानरंयेनशतकेनप्रगच्छति देवतार्थंहि
यमानंवित्तंहरतिमंदधीः ४७ ब्राह्मणान्भोजनस्थानांहिवियोजयतिपातकी अन्नमेकःस्वयंभुक्तेव
चयित्वासुतान्द्विजान् ४८ तंप्रियानेमहाभागबाधतेसाविषूचिका अन्नंदद्सुरसेवंहिमानवंनतुपी
डयेत् ४९ येत्रगोत्रभवांनारींकामयंतिविमोहिताः नराश्चनार्यापितथापुरुषंपुत्रसयुताः ५० तेपी
डयंतेप्रमेहेनपुत्रकेणतवप्रभो सुवर्णतस्कराश्चान्येमूत्रकृच्छ्रेणसर्वदा ५१ सुवर्णसिकतांदत्वासौव
र्णंदेवभूषणं पलप्रमाणंतुलितंप्रमेहान्मुच्यतेजनः ५२ सुवर्णकमलंदानंकृत्वापूर्णंपलेनतु द्विजायश्रो
त्रियायात्रमूत्रकृच्छ्रात्प्रमुच्यते ५३ लिंगपीडाशिवस्वंचयेहरंतिविलोभतः परस्त्रीसमालोक्यमुखं
स्फुरितकारिणः ५४ शरीरंपांडुसंकाशंपांडुनासद्धिपीड्यते ददातिदानंविप्रायमाहिषंशाल्मस म्मतं
५५ पिण्याकसर्षपोपेतंजपाकुसुमपूजितं तीर्थेरस्यंमुक्तलारव्यंवैष्णवंकुरुतेजपं ५६ त्रिपंचाशतसह
स्त्राणियोनरस्तंप्रमुंचतु पाडुनामातवभ्रातानचेत्ताःपिमरिष्यति ५७ अजांप्रयच्छतिनरःश्रद्ध
याकांचनान्वितां विप्रायवेदविदुषेशोफांमुंचतितंनरं ५८ नस्यातव्यंत्तयातस्यगात्रेपुंसःकथंचन
जलोदरोयातुजनंगर्भपातिनमादरात् ५९ पश्चात्यजतुतंभूतंप्रपापुण्येनभूषितं शतमष्टोत्तरंघोरं
व्रणानांप्रममानिनां ६० तुलापुरुषदानेनसमयंनतत्प्रशाम्यति अर्धंनमृतांसुरभींयथोक्तांयःप्रच्छ
ति ६१ तस्यगात्रेचतेःसर्वेव्रणैःस्थेयंनकर्हिचित् विचर्चिकानरंदुष्टरसतस्करिणंचिरं ६२ परिपीड
यतुत्वावद्यावदत्तंनकांचनं भगंदरोजनंत्यस्कासौवर्णंकदलीफलं ६३ दानांरपलमात्रंहिब्राह्मणाय
तृष्णासो सन्निपातोनरंचैवशिवप्रासादभंजकं ६४ समाश्रयतिभूलोकेयातिविश्वासघातकं पापवा
शवलान .. तरोब्रजत्वसौ ६५ जीर्णघृतमकर्तारंसमाश्रयतुतंसखा धर्मद्रव्यंगृहीतारंयातुसंग्रह
जेन ६६ मेषीमदानात्सायातुअतिसारमिथासतो भुंजतोब्राह्मणान्दृष्टिनमरोचकआव्रजेत ६७
भोजयद्विविधान्नेनतंचजत्यादरोचकः आशाभंगंविदधतेयातुस्थूलगणाश्चतान् ६८ काराग्रहेनि

* चतुर्भिर्व्रीहिभि गुंजागुंजान्पंचपणंपणान् अष्टौधरणमष्टौनकर्षंतांश्चतुरःपलं तुलांपलशतंप्राहुर्भारःस्याद्विंशतिस्तुलाः



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

यद्दान्मुक्तपंजरस्थांश्च पक्षिणः पथिचौरैर्हन्यमानान्मोचयंतिमहाभयात् ६९ तदाशिवेतुयेभक्ता
नतान्शूलशतत्रयं हिक्कामियातुयास्तेनंसहतेनपरोदयं ७० लक्षहोमस्त्रकर्तारंमाव्रजेद्दनधेज
[illegible]यस्वचित्तंतंधन्नुवर्तितःस्रयातुतं ७१ माषमेरुंतैलवापींप्रदातारंविमुंचतु हरेःकथांनश्रृ
[illegible]साधुजनस्यच ७२ तान्नरान्कर्णशूलोयंव्याप्नुयान्नितरान्नृजून् कपिलाधेनुदातृंश्च
[illegible]वर्तावैष्णवीकथां ७३ परस्तेजायतेदृष्टिर्नेत्ररुक्तंनरंव्रजेत् हारिणंपरदाराणामन्नया
नेनभुंजतां ७४ सुवर्णकमलस्यात्रप्रदातारंविमुंचति शैलेशंसोमनाथंचकाशीनाथंचवीक्षकं
७५ यदिपश्यतिसंसारंविनाशायनितत्क्षणात् किंतुनेत्ररुजांदृढंनदाहयतिताहशान् ७६ वा
णीयस्यनसंजाताकदाचित्साधुवर्णने परापवादिनीनित्यंमुखसंतापकारिणी ७७ मुखरोगस्त
मालोक्यसकुटुंबःप्रहृष्यति यस्तौतिसाधुसंयुक्तंशिवंभक्त्यासदाजनः ७८ ददातिवृषभंश्वेतं
ब्राह्मणायययथोचितं मुखरुक्तंजनंवीक्ष्यदूराद्दूरंपलायते ७९ त्वंरक्षेतिधनंप्रोक्तःस्वयंलो
भेनमोहितः स्थापितंनददात्यस्मैवित्तेशायोरुपातकी ८० वाल्मीकंतत्पदंप्राप्यस्थूलंजायतेरोपि
तं ब्राह्मणेभ्योधनंभूरिप्रयच्छतिजनस्तुयः ८१ तंनवल्मीककोयातिपीडितुंहरिसेवकं परस्या
ननसंस्थंयोग्रासंहरतिमंदधीः ८२ देवोपकरणान्यवगंडमालातमीहते नानारत्नप्रदानेनगंडमा
लाविलीयते ८३ गुरुपत्नींगच्छतीहसकंडूकुष्ठवान्भवेत् कंडूकुष्ठंप्रयात्येनशिवघंटाप्रदानतः ८४
प्रदान्यत्नाभसंतुष्टंपरंवास्यविमूर्च्छति तमपस्माररोगोऽयंभ्रामयन्परितिष्ठति ८५ कृष्णाधेनुप्रदा
नेनहेमपुष्करतोव्रजेत् दंभेनान्यरतेधर्मंगजचर्मप्रयातुतं ८६ हंसतीर्थोदकस्नानकारकंनसमा
श्रयेत् शिरोर्तिमुखारोगायातिविश्वासघातकं ८७ सूर्यपूजादिकैःपुण्यैःप्रणश्यंतिनसंशयः ध
र्मसूत्रंपरस्यायंयच्छिंदंतिनराधमाः ८८ डमरुवालुकंगाढंमुंचतस्तान्नपादतः सुवर्णसूत्रंदेवेभ्यो
ब्राह्मणेभ्यःप्रदानतः ८९ नायंतेवालुकैर्मुक्तानतान्बाधतिवालुकं जैमिनिरुवाच एवंयमनयस्त्रोक्तंश्र

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



पश्यन्ति भुवि मानवाः तेषां नरो गजापीडा भविष्यति कदाचन ९० इत्याश्वमेधिके पर्वणि जैमिनीये कर्मविपाकवर्णनं नामाष्टचत्वारिंशोऽध्यायः ४८ जैमिनिरुवाच ततोयमस्तु तैर्भृत्यैः कामरूपैः समन्वितः परिणेतुं नपसुतां नारदो यत्र विद्यते १ तत्राप्यरम्यं नगरं वीक्ष्य सारस्वतं यमः वरयामास धर्मिष्ठां मालिनीं नत्वा विभुः २ होमशालां स्थितां देवीं तर्पयन्तीं हुताशनं अर्चयन्तीं नारदाद्यानृषीन्मृगयतीं पतिं ३ तां प्राप्य कामिनीं धर्मो राजानं वाक्यमब्रवीत् प्रसन्नोऽस्मि वरं ब्रूहि किं त्वयेच्छामि तेऽनघ ४ सत्येन किल काले न तव मृत्युर्विलोक्यते वीरवर्मोवाच आ मानस्ते वरं नैव वाञ्छाम्यत्रात्मजीवितं ५ कन्यावित्तेन जीवन्ति ते नरा निरयं गताः धर्मराज उवाच भवान्दाता प्रतिग्राही धर्मोऽहं तोषितस्त्वया ६ आशीर्भिरभिनन्दामि दातारं कोऽत्र विस्मयः नृप उवाच यस्मिन्दिने मे मरणं भविष्यति हि भानुज ७ त्वद्दूरेण हृषीकेशं तस्मिन्हनि कामये यम उवाच तावत्त्वां न विमुञ्चामि यावत्कृष्णसमागमः ८ त्वन्निमित्तं परबलं धारयिष्यामि भो नरः वासुदेव उवाच एष पार्थ यमो याति तव सैन्यं प्रतापयन् ९ वीरवर्माणमायान्तं पश्य मद्दर्शनोत्सुकं दृष्ट्वा तं महारथैर्वीरैः सन्नद्धो भव पाण्डव १० मयूरकेतुप्रमुखा बभ्रुवाहनकर्णजौ प्रद्युम्नाद्याश्च युध्यन्तु कौतुकं त्वं विलोकय ११ भविष्यति महद्युद्धमनेकगजपातनं जैमिनिरुवाच एवं ब्रुवति देवेशे कृष्णे पार्थरथस्थिते १२ वीरवर्माऽर्जुनं प्राह प्राप्य युद्धं तथाविधे एते मया जिता वीरास्त्वदीयाः पार्थ संगरे १३ परं न मामिका कण्डूस्त्वां विना परिशाम्यति गोविन्द भव वीरस्त्वं पार्थो भवतु वा न वा १४ सहस्व मत्प्रहारं त्वं तिष्ठ मा मुञ्च संगरं ए[illegible]तस्य वचनं शरैः समभिरर्जुनं १५ ताडयामास हृदये बाणषष्ट्या जनार्दनं बाणैस्ते पञ्चभिर्वीराः पार्थ तत्रा[illegible]वर्द्धिनाः कृताः १६ मयूरकेतुप्रमुखास्तदद्भुतमिवाभवत् अर्जुनोऽपि नृपं बाणैः समन्ताद्व्यकिरद्रणे कृष्णा[illegible]मामर्कोऽकोऽधाद्बाणान्पुनः पुनः नृप उवाच उभौ गृहीतौ तुरगौ यथा युद्धे मयाऽर्जुन १७ तथात्र धारये वीरौ सम्मुखे माधवार्जुनौ जैमिनिरुवाच पार्थं बाणसहस्रैस्तु सकृष्णं वीरवर्मकः १९ संछादयित्वाव्यनदत्ततो यद्वत्तोयदः तस्य बाणान्सव्यसाची चकार तिलशः क्षणात् २० सु



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

मंत्रइवशत्रूणां देशान्म्रात्रैरधिष्ठितः जघानसप्तभिर्बाणैर्वीरवर्माणमाहवे ॥२१ पार्थंजघानपृष्ट्याऽसौशराणां
तिग्मतेजसाम् वासुदेवशतेनापिहनुमंतंशतेनच ॥२२ हयाभिन्नाःशरैर्घोरैर्धृताःकृष्णेनयेकरे तस्मात्कु-
[illegible] भेविषमायांनराधिप २३ अन्येवीराःशरैश्छन्नानदृश्यंतेचभूतले भ्रमितंपांडवबलंमोहेने-
दीन [illegible] २४ वीरवर्माणमालोक्यकृष्णःप्रोवाचपांडवम् श्रीवासुदेवउवाच चेत्सिपार्थमहा
बाहोयथान्येक्षत्रियाजिताः २५ तथाविजेष्यामिरणेवीरवर्माणमत्रवै नासौशक्योमयाजेतुंसुपार्थेस्त-
निपातिताः २६ यथाकर्णस्यतच्चक्रंग्रस्तंभूम्यामहारणे नास्यचक्रंग्रसेद्देवीसमर्थोजायतेपुनः २७ सु
दर्शनेनतच्छिन्नंशिशुपालशिरोमहत् नास्यकंठात्पातयितुंक्षमंचक्रंहिमामकम् २८ सिंधुराजस्यवि
शिरश्चैनीतंशीर्षंरणाद्बहिः यैस्तावकैर्मनैरस्यवीक्ष्यतेदाहदंसुरवम् २९ हनुमानेवसंग्रामेरथंलांगूलबंध
नैः निबध्नातुहिवीरस्यसंग्रामेवीरवर्मणः ३० भ्रामयित्वाशतगुणंप्रमुंचतुमहार्णवे हनूमा-
नुवाच नेदंवनंरावणस्यजंबुमालीनराक्षसः ३१ जानकीत्रासकारिण्योराक्षस्योनपुरःस्थिताः

श्रीवासुदेवउवाच मयादिष्टोरथंचास्यप्रक्षिपत्वंहिवायुज ३२ अद्याकार्यशतंकार्यंधर्मार्थं
हित्वयामया जैमिनिरुवाच प्रेरितोवासुदेवेनगृहीत्वास्यरथंहरिः ३३ साश्वंससूतंसनृपंप्र-
स्थितोगगनंप्रति परित्यज्यरथंराजातत्क्षणात्पांडवस्यहि ३४ गृहीत्वारथमाकाशेप्रपेदेपवनात्मजम्
प्रत्युवाचहनूमंतंत्वयामेनीयतेरथः ३५ भूम्यांदेविपुनःकृष्णरथंपश्यमयाहृतम् नयिष्यसिर-
थंयत्रतत्रमाधवपांडवौ ३६ नयिष्यामिनमुंचामिदेवास्यकोलयारणे क्षीराब्धौकृष्णनाथस्यशय
नंशेषमंचके ३७ रमाविरहिणीनित्यंयाचिंतयतिमाधवम् पार्थभक्त्याकृतंकांतंसाप्राप्नोतुमयापि-
तम् ३८ नयथातेभातिसूर्योनचंद्रोवीक्ष्यतेतथा यन्निमित्तंगतश्चेंद्रस्तंजानंतुविचक्षणाः ३९
त्वत्तोऽधिकंकृतंकर्मत्वद्विजानातितत्त्वतः हनूमानुवाच महिमातेमयादृष्टोवर्णितोनुत्वयाऽनघ
४० तनोतिपौरुषंस्वंयःसाधुभिर्वर्ण्यतेनसः वीरवर्मोवाच रथंगृहीत्वामेवीरनगंतुंपार्यतेत्वया ४१

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



सहस्त्रमसहारं हि मया कृष्णौ यथा धृतौ ततो जघान सरथं हनूमंतं स्वमुष्टिना ४२ तस्य मुष्टिप्रहारेणाप्ययौ पवनात्मजः एवमेकेन तेवीरास्त्रयो युद्धे तथा धृताः ४३ तं नृपं हृदये कृष्णो जघान स्वपदा त्वरन् मूर्छितः स पपात व्यां पुनरेवोत्थितोऽब्रवीत् ४४ मयात्र योधृता यूयं नैको ऽहं विधृतास्त्रिभिः यमेन मरणं प्रोक्तं मद्धीयं तद्धतं कृतः ४५ नीतौ पार्थस्य तुरगौ मया वीराः प्रतोषिताः कृष्णांघ्रिस्पर्शतो नूनं मृत्युर्मे ऽद्यपराजितः ४६ ततो वीक्ष्य नृपं कृष्णः स्वेरथे समवस्थितम् उवाच पांडवं युद्धे शृणु फाल्गुन मे वचः ४७ आयं वर्षसहस्रेण विजेतव्यस्त्वया मया सर्वास्त्रसंग्रहं वेत्ति लघुहस्तो महाबलः ४८ सर्वे जितारणे वीरास्तथाऽहमपि तोषितः अर्जुन उवाच येन त्वं तोषितो नाथ विजयी स प्रजायते ४९ पौरुषेण मदीयेन नैवाप्नोति पराजयम् एवं ब्रुवाणं वीरोसौ पार्थं प्रोवाच सत्वरः ५० वीरवर्मा प्रसन्नेस्तं मैवं वद धनंजय वीरवर्मोवाच चराचरं त्वया पार्थ शक्यते जेतुमाहवे ५१ त्वद्वाक्येनामुना वीर प्रसन्नः को न जायते इत्युक्त्वा धनुरुत्सृज्य पतितः कृष्णपादयोः ५२ निपपात तदा राजा पार्थमालिंग्य सत्वरः तुरगाभ्यां समं स्वं हि राज्यं देहं स्वकं ददौ ५३ श्रीकृष्ण नाथस्य करे कृत्वा वीरेश्वसौहृदम् तोषयन्कृष्णनाथस्य भक्त्या चित्तं पुरः स्थितः ५४ पष्ठेथ दिवसे राजा दर्शयामास सत्वरम् सारस्वतं पुरं स्वं हि वित्तं पार्थाय धीमते ५५ रत्नजातं तु संकलयन्नेतुं नैव शक्यते गजानां चंद्रशुभ्राणां सहस्राण्येकसप्तति ५६ एकतःश्यामकर्णान्हि तुरगान्स बहूनिव सुंदरीणां सहस्राणि नव पार्थकरे ददौ ५७ स्वयं पुरःसरो भूत्वा पालयामास वाजिनौ ततः पार्थमुखा वीरा ददृशुर्भासुरं नदम् ५८ नानाचक्राकुलजलमावर्त्तशतसंकुलम् नयंति हि गजा [illegible]नितरे झषाः ५९ महद्भिर्जलकल्लोलैर्हसंतमिव सागरम् पार्थो ऽब्रवीन्महाभागं वीरवर्मा[illegible] ६० प्रतियामि नदं यावत् हयो वारितरो सम् पोतैस्तारय मत्सैन्यं वीरवर्मा तथाऽकरोत् ६१ [illegible] सैन्यं समग्रं हि पार्थस्य जनमेजय ६२ इत्याश्वमेधिके पर्वणि जैमिनीये वीरवर्मविजयकथनं नामैकोनपंचाशत्तमोऽध्यायः ४९ जैमिनिरुवाच सारस्वतपुरान्मुक्तौ वाजिनौ निर्गतौ नृप लंबोदरं नम

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

स्फुलवस्ये हंयत्रतौगतौ १ वायुवेगसमौदांतौचंद्रहासिसुखोहरी चंद्रहासस्य पुरंप्राप्तौततः कौंतलकंफ्र-
मम् २ पृष्ठतोऽनुययुःसर्वेकृष्णप्रद्युम्नजिष्णवः हंसध्वजस्ताम्रकेतुःप्रवीरःफाल्गुनिर्नृपः ३ वीक्ष्यमा
[illegible] व्यामोहाद्विस्मितमानसः वाजिनौनःकुतःप्राप्तौकेननीतौतलंगतौ ४ आकाशमुत्प्लुतौकिंतु विपदद्वावा
[illegible] तावद्ददृशुराकाशेपुरुषंदीप्ततेजसम् ५ भ्राजमानंश्रियातीवद्वितीयमिवभास्करम् मुनीनांप्र-
[illegible] निवदं वेदांगपारगम् ६ नारदंकलहप्रेप्सुं वैष्णवानांगरीयसम् कृष्णमाधवगोविंदनृसिंह मधुसूद-
न ७ जपंतंमनसानित्यंभक्त्याकेवलयायुतम् पृथक्पृथक्नमस्कृत्य मुनिंतंफाल्गुनादयः ८ कुतःप्रा-
प्तंपूज्यपादैर्दृष्टौनःकिंतुरंगमौ इत्यमुंपरिपप्रच्छफाल्गुनःस्वामिगौरवात् ९ नारदस्त्वब्रवीद्दृष्टौगतौकौं
तलकंपुरम् यत्रराजाचंद्रहासोवैष्णवःपालितांपुरीम् १० यस्मैकुंतलकोराजाराज्यंदत्त्वावनंययौ धृष्टबु-
द्धेःप्रधानस्यकन्यांयःपरिणीतवान् ११ केरलाधिपतेःपुत्रःकुलिंदेनानुपालितः लक्ष्मीपतेःप्रसादात्सःप्रा-
प्यकौंतलकांपुरीम् १२ चंद्रहासोमहाबाहुर्योद्धा तादृक्नविद्यते अमीनृपतयस्तस्य कलांनार्हंतिषोडशी-
म् १३ नारदस्यवचःश्रुत्वाबीभत्सुर्विस्मयान्वितः प्रत्युवाचकआहोस्वित्चंद्रहासोमहाबलः १४ शंसना-
रदमेसर्वंचरित्रंविस्मयान्वितम् चंद्रहासस्यनृपतेर्विस्तरेणयथातथम् १५ योभक्तोहरिमेधस्यवासुदेवस्य भू-
पतेः नारदउवाच समयःकीदृशःपार्थहयौमार्गच्युतौतव १६ चिंतातुरोधर्मराजोविद्यतेहस्तिनापुरे
अर्जुनउवाच उभयोःसेनयोर्मध्येकथंकृष्णसुखादहम् १७ अश्रौषंस्त्वस्थचित्तःसन्कुरुक्षेत्रक-
थानकम् सत्कथाश्रवणेयेषांपुंसांन्नसमयोभवेत् १८ वंचितास्तेहिकालेननराह्यल्पायुषोभुवि तस्मात्स-
र्वप्रयत्नेनकथयस्वकथामिमाम् १९ अश्वमेधात्तुविप्रेंद्रयज्ञोभवतुवानवा श्रेयोर्थिभिर्नरैःसम्यक्श्रो-
तव्यावैष्णवीकथा २० एतद्यज्ञशतंचाश्वमेधादीनांप्रकीर्तितम् नारदउवाच केरलाधिपतिः
पूर्वमासीद्राजासुधार्मिकः २१ राज्यंचकारमेधावीविधिवत्पालयन्महीम् तस्यपुत्रोऽभवन्मूलनक्षत्रेब-
हुभाग्यवान् २२ तस्मात्कतिपयैरेवदिवसैर्वेष्टितंपुरम् वैरिभिस्तस्यनृपतेरंतेश्लेष्मादिभिर्यथा २३

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



युद्धंकृत्वासनृपतिर्जहौप्राणान्सधार्मिकः परलोकगतंश्रुत्वापतिंपत्न्यन्वगान्मुदा २४ पितृभ्यांरहितंबालं
धात्रीकौंतलकंपुरम् निन्येपुरःप्रियस्तस्याभविष्यंपतिसूर्जितम् २५ वर्षाणित्रीणिचतथापालितोयस्ततःशिशुः
धात्र्याकंडनपेषादिकर्मभिःकौंतलेपुरे २६ ध्यायंतीत्वनृपंधात्रीसतप्यातिदिनेदिने ततःपंचत्वमगमद्धात्री
बालंविनासती २७ सोऽर्भकस्त्र्यब्दिकोगौरोलक्षणैरभिलक्षितः वामपादेलघुंषष्ठमंगुलिंबिभ्रदेवहि २८
तदास्नेहेनबहुनाकाभिश्चित्प्रतिपालितः स्त्रीभिःपंचाब्दिकोजातस्ततःस्वैरंचचारसः २९ वीथ्यांतथाऽर्भ
कैःसार्द्धंरेमेभुंक्तेचतैःसह भोजयंतिचतंकाश्चित्स्नापयंतिपुरःस्त्रियः लेपयंतिस्रगंधैश्चचंदनैर्वर
योषितः ३० स्वपित्यपिचताभिश्चबालस्तस्मिन्पुरेऽर्जुन कंचुकादिप्रयच्छंतिकाश्चोष्णीपंचकाश्चन ३१
उपानहौपट्टसूत्ररज्जुंबिभ्रच्छुचिःशिशुः धृष्टबुद्धेःप्रधानस्यमंदिरंस्वेच्छयागमत् ३२ विशेषैर्योगेश्व-
रैःशांतैर्मुनिभिःसकलंकृतम् तंशिशुंमुनयःसर्वेदृष्ट्वाविस्मयमागताः ३३ पश्चात्सबुभुजुस्तेनशि
शुनापांडुनंदन धृष्टबुद्धिर्विनीतःसन्तान्मुनीन्पर्यपूजयत् ३४ अर्घ्यादिकैर्यथासम्यक्भोज
यामासपायसम् विविधान्नमपूपांश्चमोदकान्वटकानपि ३५ तृप्तास्तेमुनयोबालाःस्वाचांता
धौतपाणयः धृष्टबुद्धिप्रदत्तेनचंदनेनस्रगंधिना ३६ वस्त्रालंकरणैरम्यैःशोभितास्तेऽब्रुवन्वचः
धृष्टबुद्धेऽभिनंदामश्चिरंजीवसुखीभव ३७ यस्त्वयावीक्षितोबालःपुरस्तात्पंचवार्षिकः कोऽयंकस्य-
कुतःप्राप्तःकस्माद्देशाच्चनद्वद ३८ इतिपृष्टोधृष्टबुद्धिःप्रत्युवाचस्मयन्निव कतिबालानसंत्यस्मि-
न्नगरेऽथाःपुरभेदने ३९ राजकार्यपरीयस्त्वान्नाहंजानामिबालकम् मुनयऊचुः मनोहरोलक्षणपू
[illegible]ोऽध्रुवंराज्यधरोविभाति त्वंधृष्टबुद्धेप्रतिपालयैनंत्वत्संपदांपालयिताऽर्भकोऽग्रे ४० ततोविसृ-
नंदृष्ट्वासा[illegible]पबुद्ध्याऽमुनाचिंतयताकिमीदृक् यथागतंतेमुनयोऽभिजग्मुःसराजमंत्रीभृशमन्वतप्यत् ४१ किमे
[illegible]भीडयेरुदितंवचोमांयत्संपदांनोऽधिपतिर्भविष्यति बालःकथंतद्विपरीतकर्त्तानैषांमुनीनामहमस्मिवाच्यम् ४२
विचार्यमंत्रीनृपतेऽर्भकस्यसमाहरत्सोऽंत्यजवृंदमातुरः रेरेपशून्मन्वनगह्वरंमहद्विनीयबालंप्रति

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

हंतुमर्हथ ४३ विन्नंशरीरस्यकिमप्यवश्यमानाय्यमस्म परितुष्टिकारि ततोभवन्मेविविधामहिष्योमयाप्रदे
पाघटद्दग्धभाजः ४४ नारदउवाच नस्यन्तावंसमाकर्ण्यचांडालाहर्षिताःशिशुं गात्मजगृहमेत्तानिन्युस्तनग
[illegible] भयानके:पक्षिसंघैः सेवितंकंटकैर्युतं सुधार्मिकस्यतनयंहसंतमवहार्यतं ४६ शस्त्राणिशितधा
[illegible]योजगृहुस्तदा भ्रमतानेनशिशुनायादृष्टाप्रतिमाहरेः ४७ शालग्रामशिलारम्यानतांमुखेसो
[illegible]ाऽक्षिपत् संक्रीड्यमानःशिशुभिर्यष्टिपाषाणगोलकैः ४८ उत्थमानोवयस्यैःकिंसुखेनक्रीडसेऽमुना
वर्तुलेनोपलेनायसोऽब्रवीत्तान्शिशून्प्रति ४९ सखायःसंतिबहुधाचित्रपाषाणगोलकाः ईदृशोनुपमः
स्निग्धोनापरोवीक्षितोमया ५० क्रीडाम्येभिरहपूर्वंवर्तुलैरम्यगोलकैः एवंविधंमुखंतत्तेऽहंधारयाम्यधु
नाध्रुवं ५१ सबालस्तांशिलांरम्यांधारयन्वदनेरमत् कृष्णकृष्णजगन्नाथवासुदेवजनार्दन ५२ सो
ऽर्भकःपार्थदेवेशंदध्यौनारायणंस्वयं चांडालाःशितधारैस्त्वखड्गैर्भ्रैतिजगतसते ५३ पाहिमांपरमानंदस
र्वव्यापिन्नमोऽस्तुते ततोदेवःसभगवांश्चांडालांस्तानमूमुहत् ५४ मोहितास्तेंत्यजाश्चास्यमत्रुवकीदृश
शिशुः सुकुमारोविशालाक्षोदीर्घबाहुर्मनोहरः ५५ किंधृष्टबुद्धिनामेकंहंतव्याबालकोवने पत्त्रांत्यजावयं
पूर्वंनानापापेनकर्मणा ५६ बालकस्यवधाद्घोराभविष्यामोऽत्रकीदृशाः अथवाकेनदोषेणपितृभ्यांरहि
तोऽभवत् ५७ इत्यूचीर्यशिशोर्देहंनिरीक्ष्यंस्तेंऽत्यजास्तदा वामपादेकृशांषष्ठीमंगुलिंददृशुस्तदा ५८ छि
त्वानयामश्चिन्हार्थंधृष्टबुद्धेर्दुरात्मनः इत्युक्ताचिच्छिदुःषष्ठीमंगुलिंतंविमुच्यच ५९ तारितास्तेपुरंजग्मुश्चि
न्हमादायहर्षिताः धृष्टबुद्धिंनमस्कृत्यदर्शयामासुरंगुलिं ६० जदर्षतदरिद्रबुद्धिर्मयाकारिवचोहृया मुनी
नामथचांडालान्महिषीभिरतोषयत् ६१ इत्याद्य॰ नंदहा॰ अध्यायः ५० नारदउवाच शृणुपार्थम
हाबाहोसबालोगदनेवने स्मरणात्तवमित्रस्यचांडालैर्नहतस्तदा १ बालोवातरुणोवृद्धःस्त्रीपुमान्देव
कीसुतं स्मरत्यहर्निशंपार्थंकृच्छ्रान्मुक्तानसंशयः २ छिन्नषष्ठांगुलिर्बालःसरुधिरोलपवान्भृशंरुरो
ददुःखार्त्तोमोहयन्नूहरिणोगणं ३ पाहिमांदेवदेवेशकृष्णनाथकृपानिधे कृच्छ्रान्मोचयमांकांतसर्वव्या

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

पिन्नमोऽस्तु ते ४ नाहरिण्यः समागम्य लिलिहुश्चरणं शनैः अस्मत्पतिः स्वभर्तारं विहाय वनगह्वरं ५ प्रविष्टः
कामुकोऽस्माकं तस्मात्तेन विवर्जितः मुखरूपेण चंद्रोऽयं स्रवदश्रुलवः स्फुटं ६ वाहनेन विना स्वामी नभसः
स्खलितो भुवि प्रसादयंत स्वत्वा लिलिहुर्विजने वने ७ पक्षिणो दुःखिताः सर्वे छायां पक्षैः स्म कुर्वते उलूका
वृंदशश्चैव स्थिता दुःखान्न निर्गताः ८ पारावतास्तु तद्दुःखात्कृत्वा तु कठिनं स्वरं पूरयंति स्म पाषाणै रुदं
शोकविह्वलाः ९ एतस्मिन्नंतरे प्राप्तो देशाध्यक्षः कुलिंदकः तद्दूरारक्षणायैव आगतो वनगह्वरे १०
अथो ददर्श तं बालं स्रवदश्रुलवाननं जपंतं हरिनामानि रामगोविंदमापते ११ त्राहि मां करुणासिंधो द्रौप
दीं च यथा पुरा किमुपेक्षसि मां बालं वने मात्रा विवर्जितं १२ यद्युपेक्षसि मां नाथ तवैव हि लज्जा नृप तद्भक्ता
नावसीदंति श्रुतमेतन्मया विभो १३ श्रुत्वा वाक्यं स नृपतिः कुलिंदो विस्मयान्वितः अवतीर्य हयात्क्षिप्रं बालं च
परिसांत्वयन् १४ उवाच वाक्यं मेधावी सोऽश्रूणि परिमार्जयन् कः पिता तव का माता क्व च ते सुहृदां गणः
किमर्थं निर्जनेऽरण्ये स्थितः प्रब्रूहि मां शिशो १५ बालक उवाच मम माता पिता क्वास्ति नाऽहं परिपालितः
न पश्यन्महाराज रोदनं क्रियते मया १६ श्रुत्वैतच्चिंतयामास स राजा जनमेजय ममापुत्रस्य जायेत पुत्रो
ऽसौ वैष्णवः शिशुः १७ इत्युक्त्वा तं समालिंग्य वाजिपृष्ठे त्वरोपयत् स्वयं चारुह्य नगरीं चंदनावतीं कुलिंदकः
१८ ययौ परिजनैः सार्द्धं हर्षोद्रेकोत्स्फुरद्भुजः गच्छन्पथि प्रवीत्साम्मे पापर्द्धिः पुण्यदाभवत् १९ इत्थं ब्रुव
न्नगरीं संप्राप्य चंदनावतीं प्रविवेश कुलिंदः स्वभवनं पुत्रसंयुतः २० मेधाविन्यै स राज्ञ्यै तत्पुत्रं लब्धं न्य
... साहर्षिताऽब्रवीद्वाक्यमशोच्याऽहं तु केवलं २१ जातामनोरथाः सर्वे पावितोऽहं न संशयः नारद उ
... कुलिंदो मेधावी उत्सवं समचीकरत् ब्राह्मणान्ज्ञातकान्वेदविदुषः पर्यपूजयत् २२ गणका अ
निरूपयन्कुलिंद तवार्भकः अयं बहुश्रवाः श्रीमान्विष्णुभक्तो महायशाः चंद्रः शुक्ले सुखाद्रम्याद्धसतो
ऽस्य पतिष्यति २३ चंद्रहासेति नाम्नाऽयं भविष्यति धरापतिः ततः प्रभृति सोऽपार्थचंद्रहासो दिने दिने २४ कु
लिंदस्याशया सार्द्धं व्यवर्द्धत यथा शशी अकृष्टपच्या पृथिवी प्रजा आनंदनिर्भराः २५ गावश्च घटदोहिन्यो देशा



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

आसन्नमनोरमाः समाद्विकश्चंद्रहासोनानास्वरविनिर्णयं २६ विचार्यसम्यग्ज्ञनसाहरिरित्यक्षरद्वयं सज्जना
ग्रसद्दाकुदृस्तस्तरासोः स्वरपाठकः २७ अहर्निशंचंद्रहासहरिरित्यक्षरद्वयं उदाहरत्तिनान्यांस्तवर्णान्पठसिना
[illegible] हासउवाच सिद्धोवर्णसमाम्नायः समग्रोप्युच्यतेमया हरिरित्यक्षरालापान्नान्यंनिःसरतेमु
दौ [illegible] मदीयात्किंकरोम्यद्यकिंकरोभवतामहं ततोगुरुश्चकोपास्मैवेशंभिन्नंकरेदधत् ३० कःकेनिभण
वेशिष्यथथैवंपरिवर्तते चंद्रहासोब्रवीद्वाक्यंभीतवत्तशनैःशनैः ३१ नभणामिकदाचिन्मेजिह्वापरिव
र्तेत हरिनामवर्जयिष्यामिनान्यैःशास्त्रैःप्रयोजनं ३२ यत्रनामहरेर्नोस्तितानिशास्त्राणिकिंप्रभो यस्मिन्
शास्त्रेपुराणेचहरिनामनदृश्यते ३३ श्रोतव्यंनैवतच्छास्त्रंयदिब्रह्मास्वयंवदेत् नारदउवाच शृणुपा
र्थमहाबाहोवैष्णवस्यशिशोःपुनः ३४ चरितंचंद्रहासस्यसर्वपापप्रणाशनं एतस्मिन्नंतरेक्रुद्धःकुलिंदभव
नंययौ ३५ चंद्रहासगुरुर्गत्वाकुलिंदंवाक्यमब्रवीत् महन्भूतस्यसंचारात्कस्यचित्तवपुत्रकः अहर्नि
शंहरिरितिप्रजल्पन्परितिष्ठति ३६ पाठितोपिमयाशास्त्रंकुबुद्धिर्नपठत्यसौ यथाज्ञानमराजेंद्रतद्धिरा
स्मिन्नसंशयः ३७ कुलिंदउवाच दैवाल्लब्धोमयापुत्रःसकथंताड्यतेधुना ईदृशोपिपिशाचोयं
मूर्खःपालयितांध्रुवं ३८ नास्याविगुरुर्भिक्ष्वित्रंशिशोरस्यचरितंमहत् एकादशीदिनेप्राप्तेनान्नंभुंक्तेन
चामृतं ३९ अमुंविनाकथंभुंक्षेतस्ययंस्थितिरीदृशी तस्माद्यादिगृहंविप्रचंद्रहासोयथासुखं ४०
वर्ततामष्टमेब्देस्यमेखलाबंधनक्रियां करिष्यामिततश्चायंवेदाभ्यासंकरिष्यति ४१ यथागतं
गतोविप्रोहर्षितोभूत्कुलिंदकः गाढमालिंग्यतंपुत्रंचंद्रहासंमनोरमं ४२ अनेनैकेनपुत्रेणपाविता
विषयाममविष्णुभक्तेनहंसेणकिमन्यैर्बहुभिःसुतैः ४३ सर्पिण्याबहवःपुत्राजायंतेहरिभस्मकाः
अयंहरिपदध्यानगतचित्तःसुतोमम ४४ किंमयाचरितंपूर्वंतपःपंचाग्निसाधनं येनाहंप्राप्तवान्पुत्रं
वैष्णवंजनवल्लभं ४५ नारदउवाच अथाष्टमेब्देसंप्राप्तेमेखलाबंधनक्रियां चंद्रहासस्यसकलां
व्यदधात्सकुलिंदकः ४६ ततोवेदाहुतीर्हुत्वासांगंवेदमपाठयत् अपीपठच्चंद्रहासोवेदध्यायनहरिंत्वहि

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



४७ पठित्वानिखिलंवेदंसोऽब्रवीत्प्रीयतांहरिः वेदेषुस्मृतिशास्त्रेषुगीयतेमेप्रभुर्हरिः ४८ नान्यपश्याम्यहं
वस्तुयत्रनायंहरिःस्थितः इत्थंवेदार्थमालोक्यधनुर्वेदमथाभ्यसत् ४९ द्वंद्वगणेद्दंगलक्ष्यंस्थाप्यबाणा
नमूमुचत् सन्दकिंचापेवर्त्ततेहृदंतंसात्तिकंगुणं ५० परामृश्यचसंयोज्यचित्तमेकंशरःकृतः येनापि
ऋजुनाबालःप्रापलक्ष्यंजनार्दनं ५१ अमुनातुप्रकारेणयत्तुलक्ष्यंनजानते तान्जनान्दृश्यसेवत
ह्लक्ष्यंपांडुनंदन ५२ नारदउवाच शरीरतूणात्त्वयमेवपंचवाणाययुक्तस्यकुलिंदसूनोः एकीभवंस्त
स्यत्वनुप्रविष्टाजनार्दनंलक्ष्यमतीवचित्रं ५३ एवंधनुर्वेदमथाभ्यसत्तस्ततोगुरुस्तानपिपर्यपूजयत्
वाजीगणंशत्रुगणंसमग्रमपीपलद्देशमजीजयत्तं ५४ हंसाधिरूढश्चलकुंडलोऽसौरवलीनसाक्ष
स्यचकारनम्रं गुरुभ्यआहस्मनमेभ्रमोस्तीनृचेहरिंप्राप्यकथंविमूढः ५५ इत्याश्वमेधिकेपर्वणि
जैमिनीयेचंद्रहासोपाख्यानेचंद्रहासविद्याभ्यासवर्णनंनामैकपंचाशत्तमोऽध्यायः ५१ अर्जुनउवा
च धन्यास्तेविषयायेषुताहशोवैष्णवःस्थितः अभ्यासमीदृशंचक्रेधनुर्वेदस्यनारद १ हरिभक्तेक
दावीस्येदलीदामेसदाभवत् आवयोःशब्दसान्निध्यंवर्ततेनेतरेचिद्दं २ उत्तानचरणोव्याम्निपाता
लेसवलिःस्थितः विभीषणस्तुलंकायांसःस्वर्गेनःपितामहः ३ इतस्ततस्त्वभ्रमुसिकृतस्त्वदर्शनंम
म अधुनाभाग्यसंयोगाज्जातोनोसंगमोमुने ४ अधुनाचंद्रहासंतंदृष्ट्वाप्राप्स्यमहत्फलं कथ
यत्त्वकथामेतांसुधारूपांमनोरमां ५ तारुण्यविषमंप्राप्यकिमाचरितवान्मुने चंद्रहासोनृपवर
[illegible]नस्वतत्त्वतः ६ नारदउवाच अथोनषोडशाब्दोऽसौजनकंवाक्यमब्रवीत् विभोददासिचेन्म
[illegible]दिग्विजयायतान् ७ याम्यहंसकलान्भूपान्जितांतत्त्वबलादृदीन् धनंसमानयिष्यामिनरा
नेकृष्णास[illegible] ८ कुलिंदःप्रस्तुवान्वेदंकथमेकःप्रयास्यसि राजानःसंतिदुर्जेयाःसैन्येनमहताष्टताः ९
अथवावासुदेवंतंसंस्मृत्यगच्छसेहगत् अस्मत्तामील्हष्टबुद्धिर्मंत्रीकौंतलपस्यसः १० शतग्रामकस्वा
पंदेशस्तनार्पितोमम इतस्तस्यैवनृपतेर्वैरिणाबलवत्तराः ११ पीड्यंतिस्ममदेशंत्वामाकर्ण्यापरेमिरे



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

इत्थंपितुर्वचःश्रुत्वाचंद्रहासोययौमुदा १२ रथिभिःपंचभिःसार्द्धंदेशास्तान्वीरपूरितान् तान्सर्वानजयच्चं
चंद्रहासोनृपान्हसन् १३ वृथाराज्यमदेनामीमत्तानाराधयन्हरिं परिभूतान्मयामत्तान्रथिनःसादिनोन
गान् १४ नरक्षितामयाग्रस्तान्कृतंतेदेवंजनार्दनं चंद्रहासभयाद्दीनावैरिणस्तेविलिल्यिरे १५ वसुदक्क
न्येविप्रयोर्दमुक्तासिरोषायपयोलकाः नारदउवाच विजित्यनृपतीन्सर्वान्राजानश्चान्सहस्वराः सुवर्णरत्नमुक्ता
पूरिताशकटान्बहून् १६ चंद्रहासःसमादायस्वांपुरींचंदनावतीं आविवेशकुलिंदेनसम्मुखेनाभि
नंदितः १७ दीपदीपितपात्राणांमात्रानीराजितस्तथा पितरौचनमस्कृत्यशिबिकायामरोपयत् १८ न
रवाहैर्गृहीतायांपदातिःप्रययौपुरः वहन्नुपानहौपित्रोश्चंद्रहासोऽब्रवीद्वचः १९ पित्रोर्भक्त्याविना
किंचिल्लभ्यतेभुविनोनरैः लक्ष्मीनारायणावेतौपितरौचिंतयाम्यहं २० नारदउवाच चतुष्पथेसमा
यांतंददृशुःपौरयोषितः चंद्रहासंविशालाक्षंहसंतंमदनंश्रिया २१ चंद्रहासइहआगतःसखीप्राह
काचिदबलाचसस्मिते चंद्रहासइहयावद्दंचितोहंतिपातकंच भूविलोकनैः २२ तामथालपत्का
चिदहोस्वितूलज्जसेनगदतीकिमद्य यःसद्दहसतिकामुकरूद्दमत्रिजोपिकलमेतद्वरयं २३
एवमादिवचःशृण्वन्चंद्रहासःस्वमालयं प्रविवेशसुहृन्मित्रपितृव्यादीन्प्रतोषयन् २४ अथाभ्य
षिंचत्पुत्रंचंद्रहासंस्वकेपदे वेदविद्भिर्द्विजैःसार्द्धंकुलिंदःपंचमीदिने २५ महोत्सवेतदाचक्रुःपौराः
सर्वेयथाक्रमं प्रक्षाल्यतोयैःप्रथमंस्थानिस्थान्यंगणानिच २६ प्रमार्ज्यमार्जनैःशुभ्रैश्चांदैःतचूर्णकै
र्व्यधुःचतुष्काणिपताकाश्चवितेनुर्हर्षिताजनाः २७ उच्चैर्जगुर्नामहरेःपदैर्ललितवर्त्तनैः एकीभूयततः
पौराश्चंद्रहासमपूजयन् २८ चंदनेनसुगंधेनकेसरेणसुगंधिना तथाचंपकमालाभिर्धूपैरगरुजैःशु
भैः २९ नीराजयंतिस्मतदातंचकर्पूरदीपकैः एवंसंपूजितःपौरैश्चंद्रहासोऽब्रवीच्चतान् ३० अतःप्रभृति
भोपौराःप्रासेयाम्येद्दिनेशुभे उत्सवंचैकभक्तंयोनकरोतिस्मवैरिपुः ३१ तथाविष्णोस्तिथौचान्नंयोभुंक्तेस
महान्नरिःपातकानांगणःसर्वःप्राप्तैनैकादशीदिने ३२ भीतोविलीयतेचान्नेनभोक्तव्यंततोनरैः घटिकाः

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



द्दतुपंचाशदृश्यतेदशमीयदा ३३ सारिकातिथिर्मंतव्याद्दशमीत्परेहनि अविद्धाचैवकर्तव्यावैष्णवैर्वि
ष्णुवल्लभा ३४ पापार्श्चीताधर्मरतानाविष्णोर्भक्तिसमन्विताः उभयोःपक्षयोःरात्रौयजागर्तिहरेर्दिने ३५
नेषामहंसदारासोभविष्यामिनसंशयः आयुष्यंचपलंनादकुजलबुद्बुदसन्निभं ३६ चिंतयध्वंजना
मूढामाधवंवक्षसुस्थितं अस्थिरस्तंभस्नायुबद्धंमांसस्वतजलेपनं ३७ शतच्छिद्रगृहेव्यामलाभंकोधी
दिवैरिभिः एतादृशंशरीरंचव्रतमेकादशीसमं ३८ यद्विचार्यस्नमंबुध्यातद्यूयंकर्तुमर्हथ एकादशीस
मंकिंचित्पावनंभुवनत्रये ३९ नश्रुतंनमयादृष्टंतस्याःस्वामीहरिर्यतः इत्यादिष्टास्तेनपौराल्लक्षसदृशुमे
निरे ४० सुवर्णरत्नवासोभिःपौरानन्यांश्चदुर्बलान् चंद्रहासोद्विजान्सर्वान्समलंकृतवान्मुदा ४१ मंदि
राणिविचित्राणिसद्विजार्थमकारयत् वापीकूपतडागादिपूर्तंविष्णवालयानिच ४२ शिवालयानिसत्राणि
बहून्योगेश्वराश्रमान् प्रपाश्चकारविविधाःफलपत्रपयोधिकाः ४३ नारदउवाच देशाद्देशान्तराल्लोकाआ
जग्मुश्चंदनावतीं ब्राह्मणाःक्षत्रियावैश्याःशूद्रप्रभृतयःप्रजाः ४४ पुत्रपौत्रैःपरिवृताधनधान्यसमन्वि
ताः संस्थापयामासमुदाप्रजाःसर्वाःकुलिंदजः ४५ प्रजाभिरष्टादशभिर्दृष्टाभिश्चसमन्वितः चंद्रहासोहरौ
भक्तिंच्यवर्धयततांपुरीं ४६ यस्यासमागतश्चार्थीकुबेरहसनिश्रिया इत्तयाचंद्रहासेनभायनामित्यधोक्ष
जः ४७ तांचंदनावतीपरिपालयंतंतंचंद्रहासंजनकःकुलिंदः उवाचहेपुत्रमयाभृदेयंनिकायुतंकुंतलपा
पराजे ४८ तद्धर्मस्समस्तभवेप्रदेयंतद्धर्ममप्यर्धमभुष्यपल्ये तलेपयामःसमुद्धारसत्वंमीतियथामंत्रिवरो
...त्तॄ ४९ इतःपञ्चोजनंवत्सविद्यतेकौंतलंपुरं यस्मिन्कौंतलकोराजागालवनपुरोधसा ५० राज्यंचकुरुतेम
नेकधा...णाधृष्टबुद्धिना चंद्रहासःसमाकर्ण्यपितुर्वाक्यंप्रहर्षितः ५१ यत्रमंत्रिणंचराजेचपल्येयस्मैयत्नेवसु
तसचंगालवायास्मैप्रेषयामासलीलया ५२ वाजीभिरष्टैःशकटैर्दुकूलानिचकांचनं श्रुक्षंचमलयंचारकर्पू
रंमृगसंभवं ५३ गजाःसंप्रेषितास्तेनवाजिनश्चमनोरमाः तस्मैकुंतलपायासौमंत्रिणेधृष्टबुद्धये ५४ चारुवि
त्रसितहितंपत्रंप्रेषितवान्पुनः पत्रंतद्धनंसर्वंसमादायसतस्थिरे ५५ सेवकाश्चंद्रहासस्यप्रापुःकौंतलकंपुर



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

एकादशीदिने प्राप्ते सायाह्नेन स्वसेवकाः ५६ पुरोपकंठे सुजलां नदीं दृष्ट्वाऽब्रुवन्नृपः स्नात्वा संपूज्य च हरिं प्रविशा
म ततः पुरं ५७ हरेः संपूजनात्सद्यो भद्रं नो हि भविष्यति नारदउवाच सनृपः प्रणेमुर्जेपुस्ते दध्युर्नारायणं नदा
५८ दधुः शिरसि ते देवीं तुलसीं हरिवल्लभां एवं नियममास्थाय विविशुस्तस्य मंदिरं ५९ सेवकाश्चंद्रहासस्य
[illegible] धृष्टबुद्धिनः नानाद्रव्या स्वसोदरलाधृष्टबुद्धिरदूषयत् ६० मनसीसंकुलिंदोऽसौ मृतस्तेन दृशाऽभी
[illegible] ताश्रवीत्प्रणतान्सकुलिंदस्य सेवकान् ६१ कदा पंचत्वमापन्नः कुलिंदो देशरक्षकः दिनानि कति जातानि
नष्टानि ष्टम भून्महत् ६२ सेवका ऊचुः अनिष्टवैरिणा भूयान्मा कुलिंदस्य जातु नित् कुलिंदस्य सुपुत्रेण चं
द्रहासेन धीमता ६३ कृत्वा दिग्विजयं युधि तेन दैत्येनापि तं वसु अमी हिरण्यकलशैः कर्पूरागरुचंदनैः ६४
दुकूलैः शकटापूर्णा आर्यानितव मंदिरं एवं समगुणाः माला: कुंतलाधिपते गृहे ६५ विस्मितो धृष्टबुद्धि
स्तेनं जग्राह हर्षितः उवाच सूदान्देवान्ने मेभ्यो दयं सुशोभनं ६६ आहूना बहुशस्तैस्तैर्मृष्टैर्जेम्मुर्नसे
वकाः सूदास्तदा धृष्टबुद्धेः कथयामासुरादरात् ६७ आकार्यो वाचतान्मंत्री कुपितो रक्तलोचनः धृष्टबुद्धिर
वाच दत्तान्नमपि ये गर्वाद्भीस्पर्शनोपभुंजते ६८ कुलिंदं निगडैर्बध्वा कुर्वेहं धनवर्जितं तन्मंत्रिणोव
चः श्रुत्वा सेवकास्तु ब्रुवन्प्रभो ६९ नगर्वेनावयं स्वामिन्भुंजानो न हरेर्दिने कृतप्राणाश्च संपर्को मार्गेनः स
मपद्यत ७० तस्माद्विशपनेनान्नं स्वीकुर्मोऽमंत्रिसत्तम अथ श्रेष्ठ्यवचः श्रुत्वा मौनः प्रातरभोजयत् ७१
तान्स्वयं तु भुजे पश्चाद्दामंत्र्य नृपतिं ययौ आलोचितुं धृष्टबुद्धिः पुरीं तां चंदनावतीं ७२ संदिश्य मद्वचं
पुत्रं व्यापारे नृपतेरथ संमासविषया कन्या पितरं तमभाषत ७३ मत्स्यहं योमयासिक्तः सरसालःफलो
हमी वैयग्र्यं राजकार्यत्वात्तवनित्यं प्रजायते ७४ इत्युक्तोपत्ता कन्यायै तत्ने नान्दिन्नशैशवा तामाम्ना
स्य ययौ मंत्री हर्षितः सेवकैः सह ७५ द्वाभ्यां दिनाभ्यां नगरीं प्रापतां चंदनावतीं महारण्यमिदं चादावद्याते
स्मिन्महापुरी ७६ इति विस्मयमापन्नं मंत्रिणं सम्मुखागतः कुलिंदः सह पुत्रेण नमस्कृत्यानयद्गृहं ७७
पूजयामास विधिवत्सपुत्रः प्रणतः स्थितः तं मंत्री परिपप्रच्छ पुत्रस्तेऽयं कदाभवत् ७८ नारव्यानवान्तु त्रज

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



न्मभवान्नः पुरतः कथं कुलिंदउवाच औरसोनहिपुत्रोमेस्तयंभाग्योमनोरमः ७९ एकदामृगयाविष्टचित्तोहं
वनगह्वरं नविष्टः कौंतलपुराद्योजनद्वयसंमितं ८० तत्राद्राक्षमहंबालंछिन्नषष्ठांगुलिंसुतं पंचाब्दमधिकंपुत्रा
दौरसाद्धरिसेवकं ८१ चंद्रहासंविष्णुभक्तंजानीहित्वंमहामते नारदउवाच अंतर्हृष्टिरभूत्तार्थ्यंयागिवद्धृष्टधीःस्वयं
८२ नजानन्विष्णुभक्तंनचंद्रहासंनिमूढधीः अंतर्विचिंतयत्तस्मायंकिंनित्तत्संमुनेर्वचः ८३ मयायंमयाबालो
ज्ञायतेषोडशाब्दिकः चांडालैर्वंचितस्त्वाहमंगुलीदर्शकैर्ध्रुवं ८४ हौस्वचैमनयिद्येतेयुवानोमदनामलो
नोकिंकरिष्यतश्चेत्स्यादयंमेसंपदांप्रभुः ८५ अतिक्रांतंहियत्कार्यंपश्चाच्चिंतयतेबुधः तच्चास्यनभवेत्का
र्यंचिंतयानोविनश्यति ८६ यन्नगरंगतमेवास्तुकरिष्याम्यनृतंवचः मुनीनामथनिश्चित्यमनसाथाग्रवी
त्किरं ८७ धारयन्दर्पचिन्हानिवात्यांतर्मलिनस्तथा यथापापखड्गजाबुद्धिर्मनुष्यस्यमहीपते ८८ धृष्टबु
द्धिरुवाच सफलंतवजन्माद्ययेनप्राप्तःसुतःशुभः ममापिहृदयेहर्षःसंजातस्तुमहान्नहो ८९ तवपुत्रंस
मालोक्यसचवक्तुंनशक्यते ९० इत्थंवचःप्राहनिगूढभावंसुरंमलिनंमधुनेवतीक्ष्णं यथात्तृणैश्छादितग
र्तमेवयथान्नमाविष्टविषंविचित्रं ९१ इत्याश्वमे॰ चंद्रहा॰ धृष्टबुद्धेश्चंदनावतींप्रतिगमनंनामद्विपंचाश
त्तमोऽध्यायः ५२ नारदउवाच पुनर्दध्यौधृष्टबुद्धिःकुबुद्धीनामहार्णवः कथंमुनिवचोऽसत्यंकथंपंच
त्वमेत्ययं १ ग्रस्तसंहन्मिचेदत्रकुलिंदतनयंरिपुं तदामांविविधैःशस्त्रैर्हिंस्युरेतेनसंशयः २ ततोभवेत्तां
नूनंमेदुःखितोमदनामलो स्वयमेवार्थंकुर्यामुतराजभटैरहं ३ नामुनातुप्रकारेणहंतुंशक्योमयारिपुः
[illegible]भिनायदूतंकंठेतदानादृन्मितंरिपुं ४ चंद्रहासमितिध्यात्वाहर्षितःसोऽब्रवीद्वचः चंद्रहासविचि
[illegible]मानयलेखनीं ५ मषींयथालिखितैकंपत्रंत्वंमेरयपुरं तेनार्पितमुपादायपत्रमेकांतसंस्थि
[illegible]तं धृष्टधीरर्पयामासतस्मिन्वर्णान्यथाक्रमं स्वस्तिश्रीरस्तुमदनवक्तुंकारणमीदृशं ७ चंद्रहासोऽ
हितोऽतीवममायंसंपदांपदं ज्ञातव्योनात्रसंदेहःपुत्रकार्यंत्वयेदृशं ८ मारूपंमावयोदासीःकुलंशी
लंपराक्रमं विद्यांवित्तंविलंबंमाऽमित्रस्यास्यकुरुध्रुवं ९ विषमस्मैप्रदातव्यंत्वयामदनरात्रेव पार्वतीश

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

मितिध्यात्वाकृतार्थोसाम्यकद्दयम् १० चंद्रहासंविशालाक्षमूचिवान्मेवचःश्टणु महत्कौंतलकेकार्यंवि
द्यतेमदनंप्रति ११ त्वंयाहिपत्रंहिमयामुद्रितंमाविमोचय भूयाद्दूतंतवहितंपत्रेदत्तेस्फुतायमे १२
[illegible]यद्दिमुद्रांमेभविष्यतिमलंतव उभयोःशिवयोर्भेदाद्यथावत्तवजायते १३ शीघ्रंवाजिनमारुह्य
[illegible]केर्दतः याहिकौंतलकंपुत्र धर्म्यद्रष्टाऽसिपुत्रकम् १४ नारदउवाच सतत्पत्रमुपादायवेग
[illegible]स्थयिशोभनम् मंत्रिणंतंनमस्कृत्यकुलिंदंपितरंततः १५ मेधावतीमगात्द्रष्टुंनमस्कर्तुंकुलिंदवत् न-
यानीराजितस्त्वाथआशीर्भिरभिनंदितः १६ दधिदूर्वाक्षतोन्मिश्रंतिलकंकुर्वतीप्रसूः अब्रवीत्तातुपंथानः
शिवास्तेसंतुसर्वदा १७ मुखंनारायणःपातुबाहूपातुजनार्दनः वक्षःपातुहृषीकेशउदरंपातुमाधवः
१८ पद्मनाभःसदापातुनाभिंकुक्षिंनृकेसरी कटिंकमलपत्राक्षोजंघेद्वेमधुसूदनः १९ जानुनीय-
ज्ञभोक्तातेगुल्फौदामोदरोवतु सहस्रपादंघ्रियुगंसहस्राक्षस्तवाक्षिणी २० त्रिविक्रमःपातुसर्वंशरी-
रंतवपुत्रक समायाहिपुनःशीघ्रंपल्यात्समनुरूपया २१ यथात्वंनृपतेःकुक्षिंप्रासःसहजयाश्रिया चं-
द्रहासोऽथजननींनमस्कृत्यपरीत्यच २२ प्रायादश्वाधिरूढस्तैःप्रेष्यैःप्रियहितेरतैः ग्रामांतरात्समायांतंसद-
दर्शवधूवरम् २३ हरिद्राकुंकुमोद्रेकरंजितांगमनोरमम् नववत्सामथाद्राक्षीद्दृष्टिंसपुरतःस्थिताम् २४
तस्मैपथिवनाध्यक्षाःप्रददुर्दाडिमीफलम् केचिच्चंपकमालाभिरर्चयंतिस्मतंपथि २५ बबंधुर्मुकुटंभाले
नानापुष्पमयंमुदा नवोवरइवाभातिचंद्रहासःसुसुंदरः २६ प्राप्यकौंतलकाभ्याशेरम्यंक्रीडावनेसरः
सरदाभिःसमंहंसायत्रगार्हस्थ्यमास्थिताः २७ कमलोदयेनमहताधवलाब्रह्मपत्रजाः तस्यामलांभःसरसः
समीपेवनंददर्शाघ्रतमालनीलम् सचंद्रहासोऽद्भुतमेवमेनेसाक्षाद्वसंतंचवसंतमत्र २८ फुल्लंपलाशंनवकुं-
कुमाभंतमेववक्त्रंकिलबिभ्रतंतम् वनश्रियासंगमकज्जलांकंतत्पत्रवल्लीधरमद्भुताभम् २९ ततःपल्लवि-
ताअसन्द्रुमास्तस्मिन्मधौसति मंजर्यःपल्लवारम्याभांतिचूततरौतदा ३० तस्मिन्पल्लवितेऽत्यंतंकोकिलामधु-
रस्वरम् चुकूजकामिनांचित्तमाकर्षंतीवदूतिका ३१ पुन्नागबकुलाशोकचंपकाःकुसुमितावभुः मालती-

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

...श्च ५० अहोचित्रमहोचित्रंब्रह्मण्यपिमयिस्थिते इतिगर्वायतेतस्मिन्विरंचौषोडशानने ५१ वात्या
...द्वेरानयाभ्रांतावयंविभो अधोवक्त्राऊर्ध्वपादाः प्राप्ताब्रह्मालयंपरं ५२ द्वात्रिंशद्वदनोब्रह्मापत्र
...तमुदरः नाष्टच्छत्कश्चिदेवास्या मामतत्रभवोजनः ५३ ततोवयंसमवत्वारोद्दष्टौद्वादिरंचिना
दीपिव... कृपया पश्चात्परिपप्रच्छनामसः ५४ द्वात्रिंशद्वदनउवाच ग्रहस्यपूर्वंगर्वितोऽतीवसत्यंब्र
...हमेवास्मिनान्यः स्वद्यो तालिद्योत्यितेतावदेवयावत्सूर्योध्वांतहानाभ्युदेति ५५ द्वात्रिंशद्वदनो
...वंब्रुवन्वात्यापरिप्लुतः खेभ्रमन्सहितोऽस्माभिश्चतुःषष्ट्याननंस्थितं ५६ ददर्शगोलकेऽन्यस्मिन्सगर्वंकृ
तवान्बहु एवंद्विगुणयाद्दष्ट्वागर्विताऽस्तेविरंचयः ५७ प्राप्ताःसहस्रनयनंसहस्रवदनंविभुं स्तूयमानंचमु
निभिःसनकाद्यैस्तथासुरैः ५८ अथ तानागतान्दृष्ट्वासहस्रवदनोऽब्रवीत् कुतःप्राप्तंपूज्यपादैर्ब्रह्मभिःस्वा
गतंहिवः ५९ युष्मत्प्रसादाल्लोकेऽस्मिन्प्रख्यातिंप्राप्स्याम्यनुत्तमां इतिब्रुवाणंपुरुषंप्रणम्यधरणींगताः ६०
विहायगर्वंब्रह्माणस्तुष्टुवुस्तमधोक्षजं ततःप्रसन्नोभगवान्यथास्थानंन्यवेशयत् ६१ तान्विरंचीनहंपार्थवि
हायात्मानस्थितोंबुधौ तस्माद्गर्वोनकर्तव्यःपुंभिःसच्छास्त्रकोविदैः ६२ मुनेर्भाषितमाकर्ण्यहर्षितोकृष्ण
पांडवौ ददर्शतुस्तुरंगौतोकथांश्रुत्वाविनिर्गतौ ६३ प्रार्थयित्वामुनिंकृष्णःशिबिकायामरोपयत् ६४ इत्या
श्वमे० बकदाल्भ्यसंवादोनामषष्टितमोऽध्यायः ६० जैमिनिरुवाच व्याहृत्यवाजिनौशीघ्रंपुरंजायद्वयं
शुभं प्रापतुर्यत्रनृपतिर्दीर्शलेयःशिशुःस्थितः १ सिंहासनस्थःसचिवैःसेव्यमानःसभास्थितैः श्रुत्वाचफा
ल्गुनंप्राप्तंसजयद्रथघातिनं २ उच्चैःप्रकंपेप्रस्विन्नोरोमांचिततवपुर्धरः जहौप्राणानूदौःशलेयःसिंहास
नगतोभयात् ३ विलपंतीततःप्रासादुःशलाफाल्गुनंप्रति दृष्ट्वाकृष्णंनमस्कृत्यप्राहोच्चैस्त्राहिमालिनि
४ जिष्णुनानिहतोभर्तासांप्रतंचसुतोमम त्वामहंशरणंप्राप्ताकृष्णकृष्णजगत्पते ५ अथोत्थितोरथा
त्पार्थःस्वसारंसंप्रणम्यच अब्रवीत्किकृतंकिंचिन्नवपुत्रस्यवैशसं ६ तथापिक्षम्यतांसर्वंमयायच्चपुरा
कृतं गृहीष्वहस्तिनोमत्तान्सहस्रंलक्षमेवचा ७ जितान्वैवैरिणःसर्वराज्यंदास्यामितेऽनघे अर्जुन

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

[illegible]न्वचःश्रुत्वादुःशलादुःखिताभृशं ८ कृष्णंनत्वापुनर्वाक्यमुवाचकुशसंयुता दुःखहंतासमेवात्रभा
णिनांहृदिसंस्थितः ९ द्रौपद्यासंस्मृतःपूर्वंदुःखंतस्याव्यपोहयत् अन्येषामपिजंतूनांस्मरणाद्दुःखहानि
दः १० कृतार्थादर्शनेनाद्यजातास्मितवैवप्रभो पतिहीनापुत्रहीनापार्थेनास्मिकृताविभो ११ नत्रपा
जायतेतस्यसंबंधघ्नोननेनच सांप्रतंपुत्रहीनाचराज्यहीनातथाकृता १२ कथमश्वंगजानांचसहस्रं
दातुमिच्छसि ब्रुवंत्येवंबहुविधंलुठंतीकृष्णपादयोः १३ नेत्रांबुनाक्षालयंतीपादाब्जंसुरदुर्लभं एवं
सुदुःखितांदृष्ट्वाआर्तत्राणपरोहरिः १४ आश्वासयामासचतांभवमायाप्रपीडितां उत्तिष्ठोत्तिष्ठभद्रंते
गच्छपुत्रस्यसन्निधौ १५ इत्युक्त्वासहपार्थेनप्रविवेशपुरंतदा हर्म्येसभायांपतितंददर्शतनयंशुभं
१६ उत्तिष्ठभोवत्सभयंमाकृथाममसन्निधौ इत्युक्त्वापाणिनाबालंपस्पर्शमधुसूदनः उत्थितस्तत्क्षणा
देवप्रणनामहरिंमुदा १७ वर्धितौतुजनैःसर्वैःकृष्णपार्थौमुदान्वितैः भेरीमृदंगपटहगीतनृत्यमहोत्सवैः
१८ मांगल्यंपरमंचक्रुर्नागराःकृष्णसन्निधौ अर्जुनःशमयामासदुःशलांपुत्रसंयुतां १९ अब्दःपूर्णो
ह्यसंजातोगंतव्यंतुगजाह्वये निमंत्रितासमायाहिकुंतींद्रष्टुंचपार्षती २० सातथेत्यब्रवीत्पार्थोहृष्टश्चा
सीद्विशांपते जैमिनिरुवाच हर्षितासाहृषीकेशंदुःशलावाक्यमब्रवीत् २१ एवमेवत्वयाकार्यंभक्तानांजी
वनंसदा प्रसादात्तवराज्यंमेप्राप्तंगच्छामिधर्मज २२ इत्युक्त्वापुत्रसहितानिर्गताचगजाह्वयं आनयत्तत्सु
[illegible]जार्थपांडवोऽर्जुनः २३ इत्याश्वमे०दुःशलासांत्वनंनामैकषष्टितमोऽध्यायः ६१ जैमिनिरुवाच पूर्णे
[illegible]त्रःपार्थस्तुरगोमुदा रथैःस्वयंवरैरम्यो भ्रममाणोस्वलीलया १ प्रत्युवाचकथंपार्थवीरैर्भूपतिभि
[illegible]र्दिश्याभूमिंपार्थहयोभ्रमितोनिखिलामपि २ चिरकालंधर्मराजःक्लिश्यतेविविधैर्यमैः वर्षमात्रंहि
[illegible]कुर्मःकर्माग्निसन्निधौ ३ अद्यसर्वेमहीपालाःपांडवंधर्मनंदनं दीक्षितुंत्वरितायांतुत्वयासहगजा
[illegible] पुरस्कृत्यहयाचाग्रे नानावादित्रवादकाः नर्तक्योविविधैस्तालैर्हस्तकैःकरणैस्तथा ५ प्रद्युम्न
श्चानिरुद्धश्चवृषकेतुर्महाबलः बभ्रुवाहोपिसैनेयोवीरवर्मानुशाल्वकः ६ बर्हिकेतुर्हंसकेतुस्तथानीलध्वजोव



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

[illegible]ध्वजोमहावीरःप्रवीरश्चमहारथः ७ यौवनाश्वश्चंद्रहासस्तथाऽन्येबहवोनृपाः भूषिताविविधैर्हारैःकटकैं
[illegible]स्तथा ८ तुंगैस्वामरैर्धूपवासैःपुष्पैर्विलासिताः नानाकुसुममालाभिर्वरचंपकमंडिताः ९ रत्नोपुरंप्रयांत्वते
दीपिकाभिःप्रकाशिताः गंधतैलावसिक्ताभिःप्रस्तुतावंदिभिर्भृशं १० अहमग्रेप्रयास्यामिधर्मराजपुरंप्रति जे
[illegible] एतावदुक्त्वावचनंकृष्णोनागपुरंययौ यत्रास्तेधर्मतनयोमहर्षिपरिवारितः ११ गंगातीरेवरक्षेत्रे दि
[illegible]डिते देवकीसमुखायत्रस्त्रियःसंतिमनोरमाः १२ धर्मराजगृहंप्राप्यराजानंवीक्ष्यमाधवः नमस्कृत्वा
ग्रतस्तस्थौनृपेणाप्यभिनंदितः १३ शशंसपार्थसंप्राप्तंहयंराजन्यमंडले प्राप्तोनीलध्वजोराजाहंसकेतुर्महाव
लः १४ मयूरकेतुर्बलवान्बहुधायःपरीक्षितः धर्मराजतवभ्रातात्वत्पुण्येनजितान्नृपाः १५ सुधन्वायोधितो
वीरोराजन्कृच्छ्रेणसंयुगे सुरथेनापिसभयाःकृतावीरेणतेविभो १६ ततोमणिपुरंप्राप्तःसव्यसाचीहयान्वितः
बभ्रुवाहेणसंग्रामेपुत्रेणनिहतोऽर्जुनः १७ उलूपीमणिनापार्थंजीवयामासभामिनी प्रथमंकर्णपुत्रंतंसर्ववीर
प्रतापकं १८ संजीवयित्वाल्तरितातस्मिन्कालेपतिव्रता पुत्रेणसहितःपार्थोययौसारस्वतंपुरं १९ वीरवर्माव
शीयत्रसंजातःस्वयसेवसः ततःकौंतलकंवाजीप्राप्तस्तेधर्मनंदन २० चंद्रहासोधिपोयत्रदुर्जयःससुरासुरैः
ततःसतुरगोयातोमध्येनदनदीपतेः २१ शुष्कपत्रंयत्रकृत्वामस्तकेबकदाल्भ्यकः चिरास्थितोमहातेजास्तप
स्तेपेचसुव्रतः २२ ददृशुःपार्थमुख्यास्तेपंचवीरामयासह तंमुनिंहिपुरस्कृत्यसमानयतितेऽनुजः २३ वित्तं
बहुसमानीतंरत्नानिविविधानिच स्तोकाहिपृथिवीपार्थप्रतापस्तेऽधिकःप्रभो २४ एवंकुशलिनःसर्वेपुनःप्रा
प्ताःस्वमंदिरं यथामावीक्षसेराजन्तथासर्वान्विलोकय २५ एहिभीममहाबाहोदेहिमेपरिरंभणं ततोभी
मादिभिर्वीरैर्वासुदेवोनमस्कृतः २६ नमस्कृत्यहरिःकुंतींमातुस्ताःपुरतःस्थिताः ववंदेमुदितस्तत्रक
श्यन्कौशलंस्वयं २७ द्रौपदीचसुभद्राचनमस्कृत्यजनार्दनं स्थितासमीपेकृष्णास्यहर्षव्याकुललोचना
२८ गांधारींधृतराष्ट्रंचविदुरंसंजयान्वितं ददर्शकृष्णोभगवान्परिषज्ययथासुखं २९ ततोभीमेनसहि
तोविवेशस्वंनिवेशनं यत्रसारुक्मिणीदेवीसत्यभामाचलक्ष्मणा ३० तथाजांबवतीरम्याकृष्णदर्शनलाल

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



सा एतान्श्चान्यान्श्चनावह्वोवीक्षंतेहरिमागतं ३१ उवाचसत्यभामाथस्वनाथंसुसमागतं पालितःपांडवोना थसहयःसवलोवने ३२ कान्चिन्नाशात्त्वयानोवानारीकुञ्जाथवामना समीलाहियथापार्थःप्रयाणःस्मिप्र लब्धवान् ३३ जैमिनिरुवाच तस्यास्तद्वचनंश्रुत्वाप्रहस्यमधुसूदनः प्रत्युवाचसमीपस्थंभीमसेनंमहामतिः ३४ अस्याःश्रुतंभीमवचोवक्रयन्नामभाषिते बहुपुत्रोऽस्मिसंजातःपौत्रैरपिसमन्वितः ३५ युधिष्ठिरस्यन गरेवहुहृद्दसमागमे यस्यमेऽवस्थितिर्जाताऽयपाहिस्त्रीपरिग्रहे ३६ एवमेवनजानातिसत्यावक्तुंचगोपने बालत्वेयत्कृतंकिंचित्तामतेतन्ममेप्रियं ३७ एतस्मिन्नंतरेप्राप्तःप्रतीहारोमहीपतेः कृष्णंविलोक्यभीमंचवि नीतवदुवाचह ३८ उत्तिष्ठंतुजनाःसर्वेकृष्णमुख्यानृपालये सर्वैस्तुसहितःकृष्णाकुरुयज्ञंमनोरमं ३९ जै मिनिरुवाच ततोदेवोनृपंप्राहःप्रत्युवाचमहाबलः त्वयात्रराजन्स्थातव्यंयज्ञवाटेमनोरमे ४० अहंचधृ तराष्ट्रेणवृद्धैश्चपरिवारितः ऋषिभिःसहितोयास्येभ्रातृभिःसहितोऽग्रतः ४१ अर्जुनोयत्रतंदिव्यंपरिवार्य महाबलः बकदाल्भ्यंसुचारितंसहयःसंस्थितःपथि ४२ कुंतीचसन्मुखायातुतथैवममयोषितः संभावयं तुसंप्राप्तंमुनिस्त्रीगणसंयुताः ४३ ब्राह्मणाश्चाश्वयेवर्णावेदध्वनिसमन्विताः लाजावर्षंप्रकुर्वाणागजस्थाश्च कुमारिकाः ४४ पताकाभिर्विचित्राभिर्नगरंसमलंकृतं नरैश्चनृत्यसंयुक्तैर्नानाकौतुकमिश्रितैः पुष्पोत्करैः समाकीर्णंचंदनोदकशीतलैः कुर्वंतुराजपुरुषाःपार्थस्याद्यसमागमे ४६ एवंकृष्णेनतेसर्वेसंदिष्टास्तेस्तथा [illegible] पुरस्कृत्यहृषीकेशंनिर्गताःपुरवासिनः ४७ प्राप्तःपार्थोहयोप्राप्तोदिष्ट्यादिष्ट्येतिवादिनः रुक्मिणीस [illegible] हिताशिबिकांययौ ४८ उषास्त्रीणांसहस्राणिपुरस्कृत्यययौपथि तथासत्यास्तकंदृष्ट्वानारीणांसम लंकृतं ४९ कुसुमैःपारिजातस्यदुकूलैःक्षीरहासकैः कौसुंभरंगयुक्तैश्चरम्यकार्पासकैर्ययौ ५० ततोजांब वतीदेवीनिरगान्मानिनीगणैः मुक्तामालाढ्यैतैःकांतैर्युवभावसमन्वितैः ५१ वेष्टितैर्दिव्यवसनैस्तमालनिभ वर्ककैः हर्षादतीवनिर्यातिसमूहाःस्त्रीमयाःपथि ५२ परस्परस्यसंघर्षात्सरत्कुंकुमपंकिला छिन्नमौक्तिक [illegible]राणांतोयेनधरणींस्त्रियः ५३ चक्रुःकर्पूरदानेनच्युतेनचकरात्करैः गजस्थादेवकीदेवीयशोदारुक्मिणी



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

स्थिता ५४ कुंतीनैवगजेमत्तेप्रस्थितापांडवंप्रति धृतातपत्रासर्वास्तायोषितश्चलचामराः ५५ हर्षेणमार्गेसंयां
...नाक्षिसुचारुलोचनाः धनंजयंचिरात्प्राप्तंवासुदेवेननोदिताः ५६ एवंमहाजनयुतःप्रातःस्नानंमलापहं रु
...वाकुसुमगंधेनवासितोहिसमस्थले ५७ भूत्यसेनास्तथंरस्यामर्धचंद्रनिभांहरिः अग्रतोब्राह्मणाःसर्वेवेद
...वनिहूतःस्थिताः ५८ तेषांपत्न्याययुश्चाग्रेदधिदूर्वाक्षतैर्युताः क्षत्रियाःस्वर्णपात्रेषुधृतकर्पूरदीपिकाः
...नेकुंकुमचंदनानिसुवर्णपात्रेषुविधायवेश्याः कौसुंभवस्त्रैश्चविकासितांगयस्तस्थुःप्रभासन्मुकुटाः
...ग्यः ६० महाजनानांपुरतश्चवेश्यानृत्यंतिमुक्ताफललोलहाराः प्रमाथिभिर्नेत्रकटाक्षवीक्षणैर्विकाशयंत्या
श्रुमनांसियूनां ६१ नृत्येनताःपथिहरिंपरितोषयंतिसन्द्रावहावरसतालयुगेनरामाः मुग्धंचतत्त्वमुखपद्म
साधिरूढंतस्थुःकरैरलिकुलंविनिवारयंत्यः ६२ इत्याश्वमेधिके॰ अर्जुनागमोनामद्विषष्टितमोऽध्यायः ६२
जैमिनिरुवाच पार्थःप्राप्तोवृत्तोभूपैःकालेनकियतानृप यत्रतिष्ठतिकृष्णोऽसौमहाजनयुतःपथि १ अर्जुनेन
स्वकंसैन्यंरचितंराजभिर्युतं समुत्तीर्यस्वयंयानात्पुरस्कृत्यतुरंगमौ २ नृपतीन्पुरतःकृत्वाकर्षिंचशिबिकां
स्थितं सत्कायानानिभूपालाःप्रयांतिहरिसंमुखाः ३ ददृशुःपार्थसैन्यंतेलीनंकृष्णकलेवरेधर्मराजनिमि
त्तंहिसैन्यरूपःस्वयंहरिः ४ सर्वेसुंदररूपाणिकृत्वायत्राग्रतःस्थिताः राजानःप्रसमीक्ष्याथप्रोचुस्तेवैपरस्प
रं ५ दृष्टवैवबहवोऽस्माभिर्देशाःपार्थहयानुगैः देशानांवैभवेनापितुष्टानिविदुषामपि ६ मनांसियानितान्य
त्रवीक्ष्ययौधिष्ठिरंपुरं गर्हयंतिनिजंचारुवैभवंदेशसंभवं पुण्यंधनंसुखंधर्मोदेवोद्यानस्यकौतुकं ७ संप
दोबहुलायत्रहसंतिभुवनत्रयं जनाःपुण्यप्रियायस्मिन्नानामंडनभूषिताः ८ रतिरूपास्तुकामिन्योनरा
मन्मथरूपिणः सूर्येंद्रवाहनैर्मान्यारत्नालंकारभूषिताः ९ विलोक्यंतेगजायत्रकिंप्रसूताहरेर्गजात् नानारत्नैः
किरीटैश्चभूषितारत्नकंबलैः १० धाराभिःपंचभिर्युक्तायत्रसंतितुरंगमाः विजेतारःसुरहयान्स्ववेगेनसमर्थिताः
११ किमत्रवर्ण्यतेचारुपांडवस्यपुरेहरिः सर्वव्याप्यस्थितोऽनंतःस्वभाभिर्भासयन्दिशः १२ कन्यकाकरनिर्मुक्तै
मौक्तिकैरत्नमिश्रितैः पार्थागमेभूभृतोऽत्रकियंतेहारसंयुताः १३ एतेराजप्रभृतयोविराजंतेऽत्रचामरैः उद्य

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



ताश्वलितैर्वीरैः किमूर्ध्वं करभास्कराः १४ अत्रापांतिहिदृंदानिऋषीणामूर्ध्वरेतसां यान्वितुंदीक्षितान्धर्मोदसि
पत्रव्रतस्थितान् १५ धूपधूमेनगगनंसमांसलमिवाभवत् कृष्णस्योपरिभूलोकेवादित्रभयशंकित १६ एषासे
नात्रविरजाधर्मराजस्यवीक्ष्यते चलितापिधृताधीरैःस्वयंकृष्णेनरक्षिता १७ एवंब्रुवंतस्तेसर्वेराजानःसंग
ताहरिं तत्रपार्थोमहाबुद्धिःकृष्णमुख्यान्महाजनान् १८ नमस्कृत्यमुदालिंग्यदर्शयामाससभूपतीन् सोबलेयीं
चकुंतींचदेवकींचपितृव्यकं १९ धृतराष्ट्रंचविदुरंप्रत्युवाचधनंजयः एनंपश्यंतुमेपूज्यंराजानंचंद्रहासकं २० वि
षयाभिरतंवीरंविष्णुभक्तंसमागतं वीरवर्मानृपश्रेष्ठोनानावीरगणाग्रणीः २१ नमस्करोतिपुरतोधृतराष्ट्रमहीप
ते २२ मयूरकेतुःसमुपैतिचायंविभेदितोयोहरिणानभिन्नः स्वधर्मतोवीरजनंतृणंखेन्यवेशयद्बाणसमीरणे
न २३ एनंविभावयनृपंसुधियांवरिष्ठंत्वत्सादसेवनरतंसहसाभिपन्नं यस्यप्रतापरविणारिपुव कृपद्मसंको
चितंगतबलंस्वकरैर्दिवापि २४ यःशेषराजभवनान्मणिमाजहारयोनागभोगविलसद्विषमाद्धार योजान्हवी
गहनशापदवाग्निदग्धंमांबाधवैर्युतमचीकरदेतिसोयं २५ हंसध्वजंःपश्यपुरःपादयोःप्रणतंनृपं यस्यपुत्रौम
हावीरोशंकरंपार्वतीपतिं २६ स्वशिरोभ्यांप्रभायुक्तं चक्रतुर्मुदितंदिवि येनसर्वेरणेवीराःस्वप्रतापेनमोचिताः
२७ तंकर्णपुत्रंप्रणतंपरिषज्जजनाधिप नीलध्वजंच्चबलिनं समुत्थापयमारिष २८ वन्हिनायेनतत्सैन्यंदग्धं
संशयितावयं जैमिनिरुवाच ततःसर्वेनृपास्तेनधृतराष्ट्रेणपूजिताः समागत्यमहात्मानंधर्मराजंववंदिरे २९
[illegible]कृत्यार्जुनस्तंवैसमालिंग्याग्रतःस्थितः भीमसेनंचवृद्धांस्तानभिवंद्यप्रहर्षितः ३० कुंतीवीक्ष्यसुतंप्राप्तं
[illegible]शरितं परिष्वज्यस्थितावीरंमुंचतीहर्षजंजलं ३१ कर्णपुत्रंसमाघ्रायमूर्ध्निचौभियबालकं प्रसुवाच्चत्व
यासर्वंरक्षितंवृषकेतुना ३२ तथाप्रहर्षिताकुंतीस्थिताधर्मनिवेशने युधिष्ठिरोथऋषिभिःसहितःकर्षितुं
ययौ ३३ क्षेत्रंगृहीत्वावृषभौद्रौपदींचसुमध्यमा ओषधीःसमुपादायदीक्षितोवसुमेवच ३४ कृष्णाद्याःस
वेभूपालाः पश्यतःपृष्ठगामिनः कुंतीचदेवकीदेवीयशोदावरवर्णिनी ३५ सिषिचुश्चंदनजलैःसकर्पूरैर्युधि
ष्ठिरं मंत्रपाठंप्रकुर्वंतिब्राह्मणाःस्त्रीभिरन्विताः ३६ कृषित्वातत्तदाक्षेत्रमिष्टिकाचयनंततः चकारत्वरितोमं



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

वेरिष्टिकानांचतुःशतैः ३७ चतुर्वेदैश्चविधिवद्व्यासमुख्यैःप्रचोदितः बकदाल्भ्येनमुनिनासमस्तैर्वेदितेनच
[illegible]ः सुपर्णाचितिरेकाहिप्रथमातत्रसाकृता सुपर्णाख्याचहंसाख्याइष्टकानांचतुःशतैः ३९ दक्षिणस्तस्यपक्ष
स्तुविहितोयज्ञवेदिभिः चतुश्चत्वारिंशताचशतेनैकेनचैवहि ४० अनेनैवान्यपक्षोहिपुच्छंमध्येशतेनच
एकविंशतियुक्तेनतस्यैवेरचितंमुखं ४१ द्वितीयाद्विगुणाभिर्हिकृताश्येनेवसाचितिः इष्टकाभिस्तृतीयातु
[illegible]द्विगुणातथा ४२ चतुर्थीपंचमीयावत्सुपर्णानांचपंचकं संज्ञातंपरिशिष्टैश्चवेष्टितंबहुभिस्तथा
[illegible]४३ अष्टद्वारयुतंरम्यंमंडपंचक्रिरेबुधाः सुपताकंसुकुंडानामष्टकंयाज्ञिकैःकृतं ४४ षट्खादिराःकृतायूपा
सप्तपालाशजाःकृताः पंचबैल्वाश्चरचिताःपंचश्लेष्मातकस्यते ४५ चषालैर्भूषितास्तत्रवेदिकात्रितयंकृतं
स्रुवाश्चस्थापितारम्याजुहूनांशतमेवच ४६ वैकंकतीनांराजेंद्रस्रुचीनांषष्टिरेवच गोचर्मलोहितंसोमवल्लीमु
सलमेवच ४७ मंडपेविहितंसर्वंतथारम्यमुलूखलं संभाराणिचभूरीणिवस्तुजातंसमाहृतं ४८ आचार्य
स्तुकृतोव्यासोबकदाल्भ्यःपितामहः ऋत्विजश्चकृतादिव्याऋषयोदीप्ततेजसः ४९ वामदेवोवसिष्ठश्च
गौतमोऽत्रिःपराशरः भारद्वाजोजामदग्न्यःकहोलोभागुरिस्तथा ५० रैभ्यःसुमंतुःकौंडिन्योजातूकर्ण्योऽथ
गालवः सौभरिर्लोमशाद्याश्चकृतास्तेऋत्विजःक्रमात् ५१ रक्षांविधायसन्मंत्रैरक्षोभेद्वारपालकाः वृतास्ते
धर्मराजेनतस्मिन्यज्ञेमनोरमे ५२ विश्वामित्रश्चपुलहोधौम्यश्चारुणिरेवच उपमन्युर्वायुभक्षोमधुच्छं
दाविभांडकः ५३ एतेकृताद्वारपालास्तस्मिन्यज्ञेऽतिसुंदरे एतेचान्येचबहवोवृतास्तेपूजिताःक्रमात् ५४
दीक्षितेनतदाराजन्मृगाजिनविधारिणा नवनीतानुलिप्तेनद्रौपदीसहचारिणा ५५ व्यासस्ततःप्रत्युवा
चदीक्षितंधर्मनंदनं उपविष्टांश्चभूपालान्दिव्यसिंहासनेषुच ५६ दंपतीनांचतुःषष्टिर्यातुगणानरंशुभं आ
हर्तुंजान्हवीतोयंमयादिष्टंयथोचितं ५७ अत्रिस्तुपत्नीसहितोवसिष्ठोऽरुंधतीयुतः रुक्मिणीसहितःकृष्णः
सुभद्रासहितोऽर्जुनः मायावतीयुतोवीरःप्रद्युम्नोयातुसत्वरः ५८ उषागृहीतकरकाअनिरुद्धान्वितासती
हिडिंबयाभीमसेनोवृषकेतुःप्रभद्रया ५९ मयूरकेतुःप्रियालीलावत्याऽयगच्छतु प्रभावत्यायौवनाश्वो

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



नीलकेतुः सुनंदया ६० गृण्हातुकलशंशीघ्रमनुशाल्वोधमिल्लया एतेमयाहिनिर्दिष्टास्तथाऽन्येजान्हवीज
लं ६१ आनयंतुनृपस्यार्थेसदाराःकन्दशौःशुभं जैमिनिरुवाच एवंव्यासस्समादिष्टाःस्वपत्नीसहितामुदा
६२ आनेतुंजान्हवीतोयंप्रस्थितावद्धपल्लवाः वादित्राणांस्वनोरम्यःप्रावर्ततजलागमे ६३ ब्राह्मणाश्चा
तेलोकागजस्याश्वकुमारिकाः मुक्ताफलानिवर्षंत्यःश्रृण्वंत्यःशंखगर्जितं ६४ पठंतस्तत्रमुनयोगायंतो
गीतकोविदाः तत्रनृत्यंप्रकुर्वाणास्तेलोकाःप्रस्थिताःपुरः ६५ नानाश्रृंगारसहितानिर्ययौसमहाजनः देव
कीचैवकुंतीचपुरस्तस्यजनार्दनः ६६ तदाकुंतीचकृष्णस्यगृहीत्वावस्त्रपल्लवं बबंधरुक्मिणीपट्टकूलमां
तेमनस्विनी ६७ तत्कौतुकंसमालोक्यनारदोमुनिसत्तमः जगामसत्याभवनंशंसितुंकृष्णनिर्गमं ६८ नारद
उवाच सत्यभामेश्रृणुवचोमदीयंकृष्णवल्लभे यज्ञारंभेसतांपार्श्वेनानानृपसमागमे ६९ रुक्मिणीबहुलं
मानंप्रपेदेहरिसंयुता निर्यातिजलमानेतुंकृष्णेनैवसुसंयुता ७० धृतातपत्रासायातिसधूपाचलचामरा ल
भतेराजसन्मानंसैवनान्यास्त्रियोहरेः ७१ समर्थःकामपुत्राऽसौपौत्रोयस्यानिरुद्धकः कस्माद्विशयितंगेहेत्व
यास्तस्येवनद्द ७२ समीपेत्वांसमालोक्यमुखदास्येणकेशवः तत्रनेष्यत्सत्यभामेयद्याशिष्यत्समीपगा
७३ सत्यभामोवाच अत्रतिष्ठतिगोविंदोमद्गृहेमुनिसत्तम अनेनसहितायास्यतत्त्वंपश्यसमागमम् ७४
जैमिनिरुवाच नारदोददृशेसत्याःकेतनंतास्थ्येकेतनं उवाचकेशवंविप्रस्त्वंदृष्टोऽसीनिसंसदि ७५ सत्यागृ
[illegible]हेपश्यामिविस्मयोमेप्रजायते युधिष्ठिरस्यपुरतोमयादृष्टोऽसिमंत्रदः ७६ सत्यायुक्तःप्रयास्येवगन्छ
[illegible]गतसतेनिर्जगामगृहात्तस्मान्निर्गतंवीक्ष्यमाधवं ७७ नारदोमुनिरन्यत्रययौजांबवतीगृहं प्रवि
श्यमंदिरंतस्याःप्राहजांबवतीमिदं ७८ नारदउवाच स्थिताऽसिकिंगृहेमातर्नगतासिनृपालयम् आहर्तुंजा
न्हवीतोयंयत्रयातिस्वयंहरिः ७९ रुक्मिणींसत्यभामांचसहनेष्यतिमाधवः जांबवत्युवाच सर्वास्तेनयुताः
विमहिष्यःकेशवस्यताः ८० यांपरित्यज्यगंतासौसानजीवतिमानिनी अस्मिन्समागमेरम्येसाधूनाम
मानिता ८१ जैमिनिरुवाच तत्रापिनारदोवीक्ष्यमाधवंबद्धपल्लवं मंदिराणिसगोपीनांबभ्राममुनिस



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

नमः ८२ सर्वाणितानिसम्मानिसकृष्णानीत्यमन्यत पुनरागत्यदेवर्षिर्मिंडपेपांडवस्यहि ८३ कृत्विग्भिः
[illegible]स्तस्थौस्तुवन्कृष्णंसनातनं वसिष्ठेनसमंसर्वेराजानोजान्हवीतटे ८४ जग्मुःसकृष्णाःसानंदा
महावीरैःसुरक्षिताः व्यासेनमंत्रितंतोयंपूजिताजलदेवताः ८५ पूरयित्वाततोव्यासःकलशंचसपुत्रकं
ददौकरेऽनुसूयायास्तस्मिन्कालेनराधिप ८६ सुवर्णकलशंचैकंपरिपूर्णमरुंधती जग्राहपुरतस्तेषांमुनी
[illegible]मुनां ८७ रुक्मिणीमस्तकेसेतुकलशंतोयपूरितं अरुंधत्यार्पितंस्नेहाद्गगानीरंदधौमुदा ८८
[illegible]ग्रस्युवाचाथवसिष्ठस्यप्रियासती दूयतेतवभद्रेकंपुष्पभारेणयद्गृहे ८९ तस्मिन्मयार्पितेनात्रकल
शेननदूयसे अरुंधतीवचःश्रुत्वासुभद्रावाक्यमब्रवीत् ९० एषाभारसहामात्रयेनगोवर्धनोगिरिः धृतःकरेगवा
र्थंचसखाहंचसलीया ९१ रुक्मिणीतंदिवारात्रौहृदिधृत्वानदूयते पतिव्रतानांधर्मोयंकृतःकेवलयाऽनया
९२ रुक्मिण्युवाच ममव्रतंसमालोक्यसुभद्रांतंधनंजयं धारयंतीहृदिसदासोढव्यमाज्ञानिनित्यशः ९३ जैमि
निरुवाच एवंब्रुवंत्यस्ताःसर्वाजग्मुःकुशान्बहून् स्वेस्वेशिरसिपुष्पाद्यैर्धृतमौक्तिकपुंजके ९४ सभर्तृका
श्चसंप्राप्तायज्ञवाटेतथाहुते मृदंगायत्रवाद्यंतेशंखाश्चपटहैःसह ९५ वीणाश्चविविधाभेर्यःशंखाःकाहल
काःशुभाः तत्रानीयजलंपुण्यंपावितःसतुरंगमः द्रौपद्याधर्मराजेनयूपेबद्धःसुपूजितः ९६ इत्याश्वमे० जलया
त्रावर्णनंनामत्रिषष्टितमोऽध्यायः ६३ जैमिनिरुवाच ततःप्रवृत्तेयज्ञेधर्मराजस्यशासनात् यज्ञविद्यावि
धानेनस्नातोऽश्वमंत्रितैर्जलैः १ भीमार्जुनाद्याःसर्वेसकृष्णाःकर्मकारकाः पादप्रक्षालनंकृत्वामुनीनांभावितात्म
नां २ स्वयमेवहृषीकेशःस्थापयामासतान्कृपीन् ततोपविष्टावासांसिपरिधायद्विजोत्तमाः ३ चंदनेनानुलि
प्तांगादिव्यालंकारभूषिताः स्रग्विणोरत्नमाल्याश्चदत्तकर्पूरवीटकाः ४ सुवर्णपीठेष्वासीनाःसंस्तुताःकृष्णपां
डवैः दीयतांदीयतामेवंशब्दोभून्नृपतेर्गृहे ५ युधिष्ठिरस्ययज्ञेतुनानाद्विजसमागमे सुवर्णंचैवरत्नानिवा
सांसिसुचिराणिच ६ गजाश्वरथयानानिगोसहस्राणिचंदनं छत्राणिचामराण्येवदासीदासगणान्महीम्
७ अर्थिभ्यश्चेतरेभ्यश्चमंदिराणिधनानिच यस्ययस्यप्रियंयत्तुतत्तस्मैदीयतामिति ८ युधिष्ठिरःकृतस्नातो

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



यज्ञकर्मणिदीक्षितः सुवर्णत्रयमासाद्यसमानीयतुरंगमम् ९ ओवाचाग्निःपश्युरभूच्छ्रुतिमेतांपवन्पुरः पिन
भोस्त्वमपोघोरत्तनलोकोभविष्यति १० युधिष्ठिरस्यतद्वाक्यमाकर्ण्यतुरगःस्वयं धुनयामासवदनमपश्य
केशवंमुदा ११ ओथाभ्यांस्त्वमभिप्रायंशशंसनकुलायसः ज्ञात्वाभावंतुरंगस्यनकुलःप्राहधर्मजं १२ वाजी
यंसतिराजेंद्रनाहंयास्येत्रिविष्टपम् अन्येषुकिंतुयज्ञेषुस्वर्गकामेषुयेहयाः १३ त्रिविष्टपंगतावीरतेषुकृष्णो
नकर्मकृत् अनीश्वरेषुयज्ञेषुस्वर्गस्तुपरमंफलं १४ जायतेभुविकर्तॄणामस्मिन्यज्ञेफलंहरिः ममापिकृष्ण
वदनेस्थितिपरंयतुयाज्ञिकाः १५ नकुलउवाच एवंब्रूतेधर्मराजतुरंगस्तेमहाक्रतौ अथैनंमुनयःसर्वेयूपपार्श्वे
सुमंत्रितं १६ राजानःस्त्रीसमूहोपियांतपश्यंतुमाधवे नकुलस्यवचःश्रुत्वायूपेनीतस्तुरंगमः १७ यूपेबद्धोह
योविप्रैःसकृष्णैरभिमंत्रितः धौम्यउवाच भीमखड्गंसमादायतिष्ठत्वंनिश्चलःक्षणं १८ यावत्परीक्षांकुर्वे
हंवाजिनोऽस्यमहामते ततोधौम्योहयस्याशुवामकर्णंन्यपीडयत् १९ तावत्क्षीरस्यधारास्तुनिर्गताज्जनमे
जय विस्मिताःसकलालोकाःशोणितंनेवदृश्यते २० धौम्योऽब्रवीद्भीमसेनंछिंधिकंवाजिनोऽधुना यथा
तुष्येज्जगन्नाथःपुराणपुरुषोत्तमः २१ वादित्रनादेमहतिप्रवर्तितेभीमोलुनात्तस्यहयस्यशीर्षकं ऊर्ध्वंगतंत
च्छिरोनत्वाधःसूर्येप्रविष्टंकिलवन्हिरूपम् २२ शुद्धंज्ञात्वात्हृषीकेशस्तुतोदैनमुरस्थले वैल्वेनकंटकेनापि
भिन्नःकृष्णेनपावनः २३ निर्गताक्षीरधारास्तुतुरगस्यकलेवरात् धारांविनिर्गतांवीक्ष्यऋषयोधर्ममब्रुवन् २४
...नकस्यापिशुद्धःपूर्वंतुरंगमः शुद्धंज्ञात्वात्हृषीकेशोधर्मपुत्रंतुसोऽब्रवीत् २५ तथाब्रुवंस्तेऋषयोदृष्ट्वा
...दिष्ट्यातेसफलोयज्ञोजायतेद्ययुधिष्ठिर २६ तेषांसंवदतामेवंतुरंगमकलेवरात् निर्गतंसुमहत्ते
जःप्रविष्टंकेशवानने २७ पश्चाच्छरीरंपतितंभूत्वाकर्पूरमेवतत् विभूतिरिवरुद्रस्यच्युतागात्राद्दशोभत २८
विस्मितामुनयस्तंतुकर्पूरंवीक्ष्यतेऽभवन् कर्पूरंजुहुवुस्तेतुहोमकुंडेतुतत्क्षणात् २९ यत्रोपविष्टोराजासोस
...कृःसमाधवः व्यासोगृहीत्वाकर्पूरंस्त्रुवेणेदमथाब्रवीत् ३० व्यासउवाच गृहाणेंद्रमहायज्ञेघनसाराहु
...विभो एहिराज्ञापितामेनादुर्लभामग्रतःकलौ ३१ शक्रःसमागतःसाक्षात्तस्तुवाचमहामुनिं देहिपावक



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

वक्त्रेणयावत्तृप्तिर्ममास्तया ३२ यावीक्ष्यतृप्तिंप्राप्तोऽस्मिभुक्त्वाशंचभविष्यति व्यासस्तत्रोज्जुहावाग्नेनौवसंततेदश
... ३३ शुक्लपक्षेहिचैत्रस्यसार्पर्क्षेगुरुवासरे स्वाहेतींद्रायविधिवत्परमामाहुतिंददौ ३४ चंद्रादिदेवताभ्य
श्चतत्तन्मंत्रैर्यथाक्रमम् ततोदिग्देवताभ्यश्चमंत्रैर्दत्वायथाविधि ३५ घनसारंजुहावाग्नौदेवतानांपुरस्तदा
हवनेनजगत्प्रीतंबभूवसचराचरं ३६ होमधूमेनराजासौपूतःप्रीतोयुधिष्ठिरः समालिंग्याब्रवीन्धीमान्दिष्ट्याजा
तश्चमेक्रतुः ३७ यज्ञांतेऽवभृथस्नानंकुर्वेऽहंनात्रसंशयः जैमिनिरुवाच ऋषिभिःसहितःकृष्णःस्नापया
...र्थिवं ३८ सहारंभीमसेनाद्यैर्वृतंभूपतिभिस्तथा सोमपानंकारयित्वाप्राशयित्वायथाक्रमम् ३९ पुरो
डाशंतुसर्वेभ्योदत्वाशेषंतदात्यदृत् जयशब्दैर्बंदिनस्तेतथावादित्रनिःस्वनैः ४० तुष्टुवुर्धर्मराजानंगुणगीतै
श्चगायकाः नीराजनंततश्चक्रुर्देवकीप्रमुखास्त्रियः ४१ कुंतीवधूभिःसहितामुदिताप्रापतत्सुखं कृत्वापू
र्णाहुतिंराजाउपविष्टोयुधिष्ठिरः ४२ अलंकृतश्चकृष्णेनतत्रराजामहात्मना शुशुभेमघवानेवयथास्वर्गेसु
रोत्तमैः ४३ पूर्वंहरिंपूजयित्वावस्त्रालंकारचंदनैः व्यासायपृथिवींसर्वांददौराजामुदान्वितः ४४ संक
ल्पपूर्वंविधिवत्पुनर्व्यासःक्रमाद्ददौ तद्द्रव्यंब्राह्मणेभ्यश्चदीनेभ्यश्चददौऋषिः ४५ रत्नाद्रिशिखरस्थं
तुचरंतंकनकंदृषम् ४६ बकदाल्भ्यायचददौतदाराजायुधिष्ठिरः ४७ एकोरथोवारणएकएवदशाश्वमु
ख्याश्चसुवर्णभारः शतंगवांहेमविभूषितानांप्रस्थश्चदत्तोवरमौक्तिकानाम् ४८ एकैकशोभूत्सचतुष्टयंच
कार्येषुदक्षंसददौनरेंद्रः ऋत्विग्भ्योद्वारपालेभ्योददौपूर्णमनोरथः तदर्धार्धंक्रमेणैवइच्छादानान्यनेक
शः ४९ ददौयुधिष्ठिरोराजान्नृपतीनप्यतोषयत् तुरंगाणांसहस्रंचगजानांचरातंशतं ५० अलंकारान्सु
वर्णस्यकोटिंप्रददौनृपः प्रत्येकंनृपतीन्पूज्यद्विगुणेनैवयादवान् ५१ रुक्मिण्याद्याःस्त्रियःसर्वाअलंका
रैश्चतोषिताः उपवेश्यासनेकृष्णमलंकारशतैर्युतम् ५२ यज्ञजंसुकृतंसर्वंहृषीकेशकरेददौ वादित्रना
दःसंजज्ञेपुष्पवृष्टिःपपातच ५३ भीमाद्याःपांडवाःसर्वेयज्ञःकृष्णेनकारितः इतिब्रुवंतःसततंहर्षिताश्चा
भवन्नृप ५४ मोचिताःपशवःसर्वेयेचयूपेनियंत्रिताः तुष्टुवुस्तेजनाःसर्वेयज्ञःकृष्णेनकारितः ५५

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



यज्ञप्रकरणंश्रुत्वामुच्यतेसर्वपातकैः सर्वैश्चपूजितास्तेवैसंतिष्ठंतिधरातले ५६ इत्याश्वमे॰युधिष्ठिराभिषे
कोनामचतुःषष्टितमोऽध्यायः ६४ जैमिनिरुवाच यज्ञस्यांतेभीमसेनःप्रार्थयित्वामुनीन्नृपान् सकृष्णान्
भोजयामासविविधान्नेनमारिष १ जनमेजयउवाच कथंतेभोजिताविप्राःसकृष्णाश्चमहीभुजः ययारी
त्यास्त्रियोबालाभीमेनरसकारिणा अन्नानिकानिजातानिसर्वंशंसमहामुने कौतुकंजायतेतीवश्रृण्वतो
मतवाननात् २जैमिनिरुवाच श्रृणुराजेंद्रवक्ष्यामिभीमसेनेनयत्कृतम् मंडपेनवरत्नास्येरम्येकांचनभूषि
ते ३ तत्रचंदनजातेषुपीठास्तरणकंबलाः सरत्नास्थापिताभांतिपुष्पप्रकरपूरिताः ४ कच्चोलानांचतुःष
ष्टिर्हेमस्थालीनियंत्रिताः प्रतिविप्रंधृतास्थालीरत्नदीपद्वयान्विता ५ तिरस्करिण्यःपुष्पाणांचंद्रिकालंबिताःशु
भाः कृष्णागरूद्भवैर्धूपैर्वासितेमंडपेमले ६ सुगंधेनजलेनाथपात्रप्रक्षालनंकृतं प्रतिपात्रंसुवर्णस्यधृतोर
त्नकमंडलुः ७ ततोभीमेनसरसंपायसंतुप्रवेशितं ददृशुर्ब्राह्मणास्थाल्यांचंद्रबिंबमिवोदितं ८ भक्तंसूपा
न्वितंनैवयूथिकाकुड्मलप्रभं ९ पुष्पपत्रफलमूलदारुभिर्वल्कलैर्व्यंजनपत्रकृतानि व्यंजनानिकटुतिक्तक
खंडैर्निर्मितानिपवनात्मजयत्नात् १० कश्चिद्द्विजस्तदाभूपाश्चीस्यपप्रच्छ चापरम् नवनस्थेनचमयाद
ष्टमेतद्धिकिंवद ११ पृच्छंतंप्राहविप्रोऽसौमत्वात्मानमतोधिकं चंद्रस्यशकलंविद्धिपतितंशतधाभुवि
१२ एवंवदतिविप्रेऽस्मिन्ततःप्राप्ताःस्मफेनिकाः स्थलेस्तस्मिन्समीक्ष्यैकोब्राह्मणोविस्मयंगतः १३ मराले
[illegible]स्यसितपत्रयुतोमहान् समुत्पन्नइतिप्राहवायुभक्षोमहातपाः १४ दंतेलूखलिनाप्रोक्तंमोदका
[illegible]पद्वचः औदुंबराणिचामूनिविपश्चेऽस्मिन्मयोच्यते १५ भक्तंमेनेद्विजःकश्चित्पुष्पाणिकुटजस्यतु
करंजिकांमुनिवरोकर्णिकांमन्यतेपरः १६ वटकंकनकाभंतुमेनेकश्चिद्द्विजस्तदा पतितंमानवीयंकिंरथच
क्रंमयागतः १७ द्राक्षारसंपिबंस्तकेकेचित्कृतरसमुद्रा लुठंतिहिसितामध्येदृष्टाकंकदलीफलं १८ मुख
[illegible]क्षेपसकलंमुनिशिष्यागतत्वचम् सिताज्यैर्मंडकंविप्रोवेष्टयित्वाततोऽपरः १९ चिक्षेपमुखमध्येतुस्तं
ग्रासःसुरवमुत्तमम् मेनेमोक्षसुखंतुच्छंभक्षयन्वटलड्डुकान् २० इत्थंभीमेनतेविप्रास्तथाऽन्येसन्नियादयः



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

लोकाः संभोजिता: सर्वेतस्मिन्यज्ञमहोत्सवे २१ संतर्पितानाहितेविप्रादिव्यचंदनचर्चिताः तांबूलंचंद्रसंयुक्तं
...विस्मयमागताः २२ शुष्कपत्राणिसंचूर्ण्यभक्षयामोवनेवयं तेकृतावरतांबूलसत्त्राधर्मसूनुना २३ जै
मिनिरुवाच ब्राह्मणैःसहितोराजाक्षत्रियैश्चमहाबलैः उपविष्टःसयज्ञांतेसहकृष्णायज्ञमंडपे २४ ततःप्रामो
विप्रवरोविवदंतोहिसत्सदि धर्मराजंसमागत्यप्रोचतुर्वचनंनृप २५ धर्मराजावयोर्वादंसम्यक्कृत्छिंधिमहामते
...उवाच बकदाल्भ्यमुखाःसंतिवसिष्ठात्रिपुरोगमाः २६ यत्रसभ्याःसुमनसस्तत्रवादकथाहिका निरूपय
...कारणंसंप्रपृथक्पृथक् २७ ब्राह्मणउवाच एभिस्तुमत्करेदत्तंक्षेत्रंस्वीयंयथाक्रमम् तत्पुनःकर्षि
ततस्मान्निधानंनिर्गतंनृप २८ धान्यमेवमयाग्राह्यंयत्क्षेत्रेजायतेपुनः निधानंनग्रहीष्येऽहंनमदीयंहि
तद्ध्रुवं २९ एभिरेवतुतद्ग्राह्यंमयात्यक्तंनृपाऽधुना पश्यमांपीडयंत्येतेनिधानेनगतत्रपाः ३० युधिष्ठिरउ
वाच सत्यंवदमहाबुद्धेकिमर्थंपीड्यसेद्विजम् भवान्गृह्णातुतद्द्रव्यंयन्नदत्तंत्वयापुरा ३१ ब्राह्मणउवाच म
यासमर्पितंक्षेत्रंपरस्मैधर्मनंदन यत्किंचिज्जायतेतस्मिन्ब्राह्मणस्यनतन्मम ३२ तच्छ्रुत्वावचनंकृष्णःप्र
त्युवाचहसन्निव मासत्रयंतुविप्रेंद्रौस्थिरौभवितुमर्हथः ३३ कृष्णवाक्येनतुष्टौतौस्विस्वावित्तंनृपालये
जग्मतुश्चस्वगृहंराजन्प्रीतौसंप्रोचतद्दिनं ३४ राजोवाच अधुनामाधवकथंनिर्णयोनत्वयाकृतः सर्वेषांपश्यता
मेवविस्मयोमेमहान्विभो ३५ श्रीकृष्णउवाच ऋषयःसंतिराजानःसुरवेनतवसन्निधौ यज्ञांतेमुदितालो
कामध्येवादकथाकथम् ३६ मासेतृतीयेघोरस्तुभविष्यतिकलिर्नृप द्रव्यार्थंविवदंतौहिताडयंतौपरस्प
रं ३७ मुष्टामुष्टिसंप्रहारेकेशाकेशिनखानखि आगंतारौचतेपार्श्वेकलिनामथितौनृप ३८ तंतद्दंनहि
धाकृत्वातान्भ्यांदास्यसिमेमतिः भविष्यंतिकलौविप्रा आचारश्रुतिवर्जिताः ३९ राजानोधर्महीनाश्चपीड
यिष्यंतितेप्रजाः अधर्मवल्लभोलोकोधर्मद्वेषीचमत्सरी ४० द्यूतमद्यरतानित्यंसर्वेव्यसनिनःसदा देवका
र्यपितॄणांवासाधुस्त्रीभरणेतथा ४१ ब्राह्मणार्थेधनंस्वल्पंदत्वातिदुःखभाजिनः भविष्यंतिकलौराजन्मुदिता
गणिकागृहे ४२ नंक्ष्यंतिचधनंभूरिद्यूतादिव्यसनेष्वपि जननींजीर्णवस्त्रेणवेष्टयिष्यंतितेकलौ ४३ वेश्यां

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



यानुश्चलींवापिदुकूलावधिंधःस्वयं धत्तूरकस्यपुष्पाणिकरवीरभवानिच ४४ सकंटकानिपुष्पाणिनयिष्यंति
शिवालये वरांश्चजजातानांकर्पूरंचंदनंतथा ४५ नेष्यंतिकुमुदंचारुवेश्यास्त्रीकुलटागृहे मातरंपितरंचैवत्य
क्ष्यंतिहिजनाःकलौ ४६ स्त्रीणांमत्रकाभविष्यंतिपरिचारकवत्तदा जननींताडयिष्यंतिलालयिष्यंतिस्वांस्त्रियं
४७ श्वश्रूश्वशुरयोश्चैववस्तुना· कलियुगेनृप वदिष्यंत्यप्रियंवाक्यंहृदयेशल्यकारकं ४८ नविश्वासंकरिष्यं
तिचवपुत्राद्ब्राह्मणाधुना कर्मभ्रष्टाभविष्यंतिचतुर्वर्णाःकलौयुगे ४९ स्वीयंकर्मपरित्यज्यपरकीयंप्रकुर्वते जैमि
निरुवाच एवंकृष्णेनकथिता· कलिधर्माभयावहाः ततोवीराःकथांश्चक्रुर्यज्ञांतेकृष्णपांडवाः ५० इत्याश्व
मे॰ कलिधर्मवर्णनंनामपंचषष्टितमोऽध्यायः ६५ जैमिनिरु॰ श्रूयतांराजशार्दूलमहदाश्चर्यमुत्तमम् अ
श्वमेधेमहायज्ञेनिर्वृत्तेयद्भूद्विभो १ तर्पितेषुद्विजाग्र्येषुज्ञातिसंबंधिबंधुषु दीनांधकृपणेचापितदाभरतस
त्तम २ जायमानमहानादेदिक्षुसर्वासुभारत पतत्सुपुष्पवर्षेषुधर्मराजस्यमूर्धनि ३ गर्वितोऽभूत्तदाराजाधर्मपु
त्रोयुधिष्ठिरः बिलान्निष्क्रम्यनकुलोरुक्मपार्श्वस्तदानृप ४ वज्राशनिसमंनादममुंचतविशांपते सकृदुत्सृ
ज्यतंनादंत्रासयानोद्विजान्मृगान् ५ मानुषंवचनंप्राहधृष्टोबिलशयोमहान् सक्तुप्रस्थेनवोनायंयज्ञस्तु
ल्योनराधिप ६ उञ्छवृत्तेर्वदान्यस्यकुरुक्षेत्रनिवासिनः तस्यतद्वचनंश्रुत्वानकुलस्यविशांपते ७ विस्मयंप
रमंजग्मुःसर्वेतेब्राह्मणर्षभाः ततःसमेत्यनकुलंपर्यपृच्छंततेद्विजाः ८ कुतस्त्वंसमनुप्राप्तअस्मिन्यज्ञसमा
गमे किंबलंपरमंतुभ्यंकिंश्रुतंकिंपरायणम् ९ कथंभवंतंविद्यामोयोनोयज्ञंविगर्हसे अविलुप्यागमंकृत्स्नं
सर्वैर्याज्ञिकैःकृतं १० यथागमंयथान्यायंकर्तव्यंचतथाकृतं पूजार्हाःपूजितास्तत्रविधिवच्छास्त्रचक्षु
षा ११ मंत्रपूर्वंहुतश्चाग्निर्दत्तंममत्सरम् तुष्टाद्विजर्षभाश्चात्रदानैर्बहुविधैरपि १२ क्षत्रियाश्चसुयु
द्धेनश्राद्धैरपिपितामहाः पालनेनविशस्तुष्टाःकामैःशूद्राश्च योषितः १३ अनुक्रोशात्तथाशेषैःसंसर्गाशीभिश्चपु
नुजनाः ज्ञातिसंबंधिनस्तुष्टाःशौचेनचनृपस्यनः १४ देवाहविर्भिःपुण्यैश्चरक्षणैःशरणार्थिनः यदत्र
ब्रूनतद्ब्रूहिसभायांब्राह्मणस्यहि १५ श्रद्धेयवाक्यःप्राज्ञस्त्वंदिव्यरूपंविभर्षिच समागतैश्चदृष्टस्त्वंततोनकु



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

महर्षि १६ इतिदृष्टाद्विजैस्तैस्तुप्रहस्यनकुलोऽब्रवीत् नैषानृतामयावाणीप्रोक्तागर्वेणवाद्विजाः १७ यन्म
[illegible]र्कामिदंसर्वंयुष्माभिश्चाप्युपश्रुतं सक्तुप्रस्थेनतेनायंयज्ञस्तुल्योनराधिप १८ उञ्छवृत्तेर्वदान्यस्यकुरुक्षेत्र
निवासिनः शृणुताव्यग्रमनसःशंसतोमेद्विजर्षभाः १९ अनुभूतंचदृष्टंचयन्मयाद्भुतमुत्तमम् धर्मक्षेत्रेकु
रुक्षेत्रेधर्मज्ञैर्बहुभिर्वृते २० उञ्छवृत्तिर्द्विजःकश्चित्कापोतींवृत्तिमास्थितः सभार्यःसहपुत्रेणसस्नुषस्तपसि
स्थितः २१ वधूचतुर्थोवृद्धःसधर्मात्मानियतेंद्रियः षष्ठकालेसदाविप्रोभुंक्तेतैःसहसुव्रतः २२ कपोतधर्मिणास्त
स्यान्दिवसेनिदारुणे नाभविष्यत्तदाविप्राःसंचयस्तान्निबोधमे २३ क्षीणौषधिसमावेशेद्रव्यहीनोभवत्तदा का
लेकालेमुसंप्राप्तेनैवाविंदतभोजनम् २४ क्षुधापरिगताःसर्वेप्रातिष्ठंततदातुते उञ्छंस्तदाशुक्लपक्षेमध्यंतपति
भास्करे २५ उष्णार्तश्चक्षुधार्तश्चसविप्रस्तपसिस्थितः उञ्छमप्राप्तवानेवसार्थंपरिजनैस्ततः २६ सतथैवक्षुधा
विष्टःसप्रस्थानायथाविधि सपयायासतंकालंसार्धंपरिजनेनवै २७ अथषष्ठेगतेकालेसयवप्रस्थमर्जयत्
यवप्रस्थंततसक्तूनकुर्वंस्तेतपस्विनः २८ कृतजप्याह्निकास्तेतुहुत्वाग्निंचयथाविधि कुडवंकुडवंसर्वेव्यभजं
तनपस्विनः २९ अथागमद्द्विजःकश्चिदतिथिर्भुंजतांतदा तंपूजयित्वाविधिवत्सविप्रःप्रीतमानसः ३० प्रोवा
चमधुरंवाक्यमन प्रह्लादकारकम् विप्र उ० धन्योस्म्यनुगृहीतोस्मिपावितोस्मियतोभवान् प्राप्तोस्यतिथिवेला
यांधर्मात्मनःस्यवतापदः ३१ स्वागतंतेद्विजश्रेष्ठभूयःसुस्वागतंतव सनाथःक्रियतांब्रह्मन्नुटजोयंप्रविश्यतां
३२ गृहागृहिणःसत्यायेषुमार्गश्रमातुराः स्वगृहेष्विवविश्रांताभवंतिचभवादृशाः ३३ अहोतीवसभाग्यास्ते
निःस्वापिगृहमेधिनः येषामशून्यादिनसागच्छंत्यतिथिपूजनैः ३४ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता
सतामेतान्यपि सदागेहेनोच्छिद्यंतेकदाचन ३५ देयमार्तस्यशरणंपथिश्रांतस्यचासनम् तृषितस्यतुपानीयंक्षुधि
तस्यापिभोजनं ३६ चक्षुर्दद्यान्मनोदद्याद्वाचंदद्याच्चसूनृतां अभ्युत्थानानुव्रजनंकुर्यान्न्यायेनचार्चनम्
३७ नकुल उ० एवमुक्त्वासधर्मात्मानमभ्यर्च्ययथाविधि स्वभागंप्रददौहृष्टेनान्नचतृप्यतिनैनसः ३८ ततोऽस्य
भार्यास्वंभागमादृत्यम्लानानतपस्विनी त्वचास्थिभूतावेपंतीभर्तारमिदमब्रवीत् ३९ भार्योवाच ममापिभागोभो

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



स्वामिन्दीयतामविचार्य अर्थिनामन्नदानेन कृतार्थास्यामहंध्रुवम् ४० ब्राह्मणउ० अपिकीटपतंगानांमृगाणां
चशोभने स्त्रियोरक्ष्याश्चपोष्याश्चनन्नैवंवक्तुमर्हसि ४१ धर्मकामार्थकार्याणिशुश्रूषाकुलसंततिः दारेष्वधीनःस्वर्गो
मेपितॄणामात्मनस्तथा ४२ भुंक्ष्वतस्मात्त्वंसक्तूंस्त्वंनतेकश्चिद्व्यतिक्रमः अनुज्ञातामयाभद्रेकुरुवाक्यंमयेरितं
४३ योनानुकंपतेभार्यांनपुष्णातिनराधमः नयशोमहदाप्नोतिनरकंचाधिगच्छति ४४ ब्राह्मण्युवाच सहधर्मच
रीधात्रासृष्टैषाभार्यापतीहद्विज तस्मान्महतिधर्मेत्वंनबाधांकर्तुमर्हसि ४५ पतिर्हिनार्याःपरोधर्मःपतिरेवहिदैवतं
पतिरेवपरोबंधुःपतिरेवपरागतिः धर्ममर्थंचकामंचयशःस्वर्गतिरेवच ४७ पत्यौप्रसन्नेस्त्रीसर्वमेतत्साप्नोत्यसं
शयम् कर्मणामनसावाचायास्त्रीपतिमनुव्रता ४८ इहैवचमहाभागासादेवैरपिपूज्यते नमयात्वय्यभुक्तेतुभुक्त
पूर्वंकदाचन ४९ व्रतमेतद्विदित्वातुत्वंसक्तून्दातुमर्हसि नकुलउ० एवमुक्तोगृहीत्वातांतान्सक्तून्सोऽतिथयेद
दौ ५० भक्षयित्वातिथिस्तांश्चनैवतृप्तोभवत्तदा ततःपुत्रोविनीतात्मापितरंप्राहधर्मवित् ५१ पुत्रउ० तृप्त्यर्थम
तिथेस्तातमद्भागोपिप्रदीयताम् किंतस्यजीवितफलंप्राप्तोयस्याशयातिथिः ५२ शून्यादिवगृहाद्दीनोनिराशः
प्रतिगच्छति विष्णुमुद्दिश्ययेन्नान्नमात्मानंपीडयंत्यपि ५३ ददतिनेहरेलोकेपूज्यंतेदेवतैरपि तेनार्जितेनवित्ते
नकिंतेषांदुष्टचेतसा ५४ अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिगच्छति अतएवमयादेवभागोदेयोद्विजन्म
ने ५५ कुटुंबंपीडयित्वातुसत्कालोभंविमत्सरः ददातियोतिथेरन्नंसयातिपरमांगतिम् ५६ पितोवाच अपित
[illegible]न्यूनत्वंबालएवमतोमम बालानांक्षुद्बलवतीतस्मात्त्वंभुंक्ष्वपुत्रक ५७ जयंतिलोकान्पुत्रेणश्रुतिरेषास
[illegible] त्वयातुजीवतापुत्रलोकाःसर्वेहितामम ५८ तस्माज्जिगीषितालोकान्रक्षस्वत्वंमेचपुत्रकः यस्मान्म
मासिपुत्रत्वंनाहंमृत्योर्बिभेम्यतः ५९ प्रायशःपापकारित्वान्मृत्योरुद्विजतेजनः कृतकृत्याःप्रतीक्षंतेमृ
त्युंप्रियमिवातिथिं ६० पुत्रउ० पूर्वेवयसिपुष्णातिपितापुत्रमितिश्रुतिः उत्तरेपितरंपुत्रस्तस्मात्सक्तून्प्रयच्छ
[illegible] ६१ नकुलउ० इत्युक्तःसगृहीत्वातुसक्तूंस्तोतिथयेददौ भुक्त्वातानपिसर्वांस्तुनैवतृप्तिमवाप्तवान् ६२ ततः
प्रीतास्नुषाप्राहश्वशुरंविनयान्विता मद्भागोपिमहाभागविप्रस्यास्यप्रदीयतां ६३ श्वशुरउ० योषिद्बालास्नुषा



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

साध्वीनियमव्रतकर्शिता कुलसंततिहेतुश्चरक्ष्यात्वंसर्वदामया ६४ गुरुशुश्रूषणेसक्तांनियमस्थांपतिव्रताम् त्वां
दृष्ट्वाम्लानवदनांपीड्यतेचमनोमम ६५ स्नुषोवाच ममत्वंस्वामिनःस्वामीदेवतायाश्चदेवता गुरोर्गुरुर्गरीयांश्चै
वंत्वंवक्तुमर्हसि ६६ अनुकंप्येतिसंचिंत्यदृढभक्तेतिवापुनः प्रयच्छभगवन्सक्तून्दीनामनुगृहाणमां ६७ नकु
लउ० ततस्तानपिसक्तून्सगृहीत्वातिथयेददौ बुभुजेचातिथिःसर्वान्नचासौतुतुषेद्विजः ६८ अनुग्रहंमन्यमा
नःसकुटुंबोमहातपाः धर्मवर्त्मनियुक्तात्मानचचालाचलोपमः ६९ तंशुद्धभावंविज्ञायप्रीतःप्रोवाचसोतिथिः
धर्मोहंद्विजरूपेणजिज्ञासुस्त्वामिहागतः ७० दमस्तपोदयादानंशौचमिंद्रियनिग्रहः सत्यंसमार्जवंज्ञानमित्ये
[illegible]मतंवोमम ७१ तस्मान्नित्यमिमान्यस्तुभक्त्यामेभजतेनरः तस्यभक्तिमतस्तुष्टोगतिमिष्टांददाम्यहम् ७२
पुण्या
[illegible]यांतुशुद्धभावेनदत्तमुंछार्जितंत्वया कृच्छ्रप्राप्तेनसर्वस्वंब्रह्मलोकंततोव्रज ७३ स्वर्गस्थास्त्रिदशाःसर्वे
दिव्याब्रह्मर्षयस्तथा स्तुवंतुदानमेतत्तेविस्मयाविष्टमानसाः ७४ सक्तुप्रस्थपरित्यागंश्रद्धयासमचीकरत्
तेनाशुभवनानूनंपप्रथेहियशोभुवि ७५ अग्नयःसफलास्तेषांवेदायज्ञास्तपांसिच येनेदृशोत्यनुप्रासोभा
वोभूतेषुदुर्लभः ७६ इत्थंतस्मिन्महाराजब्रुवाणेमुनिपुंगवे गगनात्पुष्पवृष्टिश्चपतितातस्यमूर्धनि ७७
तेजःप्रज्ञांबलंधैर्यंक्षुन्नाशयतिदेहिनाम् दुर्जयांतांयोजयतितेनस्वर्गोजितोभवत् ७८ भार्यापुत्रःस्नुषाप्रा
णास्तथैवात्मासुदुस्त्यजः सर्वाण्येतानिधर्मार्थेत्यक्तानितृणवत्त्वया ७९ नतथाप्रीयतेधर्मोदानैर्दत्तैर्महाधनैः
न्यायलब्धैर्यथाल्पार्थैःश्रद्धापूतैःसतुष्यति ८० अश्रद्धापरमंपापंश्रद्धापापविनाशिनी जहातिपापंश्रद्धा
वान्जीर्णांत्वचमिवोरगः ८१ बहुश्रद्धाविरहितंनष्टमाहुर्मनीषिणः वार्यपिश्रद्धयादत्तमक्षय्यमुपजायते
८२ रंतिदेवस्तुधर्मात्मापुरानिष्किंचनोभवत् श्रद्धापूतःसधर्मात्मानाकपृष्ठमितोगतः ८३ आत्ममांसप्रदा
नेनशिबिरौशीनरोयथा सर्वदुःखविनिर्मुक्तोमुमुदेदेववच्चिरम् ८४ पश्यदेवविमानंत्वेतत्वमाप्तमिदंद्वि
ज स्वर्गंगच्छसमारुह्यसभार्यःससुतस्नुषः ८५ नकुलउवाच इत्युक्तःपरितुष्टेनसाक्षाद्धर्मेणसद्विजः
दिव्यंविमानमारुह्यसकुटुंबोययौदिवम् ८६ ततोहंतेषुयातेषुबिलान्निःसृत्यसत्वरम् दिव्यपुष्पसमाकी

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri



गेसक्तुतोयेव्यवेष्टयम् ८७ अथधर्मप्रसादान्मेमुनेस्तस्यचतेजसा दिव्यपुष्पविमर्दाच्चहैमंपार्श्वमभूदिदं ८८
द्वितीयंतुकथंपार्श्वंहैमंमेस्यादितिचिंतयन् तपोवनानितीर्थानियज्ञांश्चाप्यागमोस्त्वया ८९ ततोयज्ञमिमंश्रुत्वाधर्म
राजस्यधीमतः आशयापरयाप्राप्तोनतुकांचनतांगतः ९० जैमिनिरुवाच इत्येवंकथयित्वातुद्विजानांनकुलस्त
दा ययौयथागतंराजन्विप्राणांतत्रपश्यतां ९१ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि अश्वमेधेमहायज्ञे
यदाश्चर्यमभूत्तदा ९२ तस्मान्नविस्मयःकार्यस्त्वयायज्ञेषुपार्थिव विनैवयज्ञैर्मुनयःश्रद्धापूतादिवंगताः ९३
अद्रोहःसर्वभूतेषुसंतोषःसत्यमार्जवम् सर्वेंद्रियजयःशांतिस्तपश्चस्वर्गसाधनम् ९४ इत्याश्वमे० नकुलोपा
ख्यानेधर्मानुग्रहेणब्राह्मणसकुटुंबस्वर्गप्राप्तिर्नामषट्षष्टितमोऽध्यायः ६६ जनमेजयउवाच कोसौनकु
लरूपेणशिरसाकांचनेनच प्राहमानुषवद्वाचमेतत्पृष्टोब्रवीहिमे १ जैमिनिरुवाच श्रूयतांनकुलोयोसौयथा
वागस्यमानुषी इहार्थेयसुराद्वृत्तंतदिहैकमनाःशृणु २ श्राद्धंसंकल्पयामासजमदग्निःपुराकिल होमधेनु
स्तमागाद्धस्वर्गलोकाद्दरिंदम ३ तत्क्षीरंस्थापयामासनवेभांडेदृढेशुभे तच्चक्रोधःस्वरूपेणसर्पस्यपर्यधर्षय
त् ४ जिज्ञासुस्तमृषिश्रेष्ठंकिंकुर्याद्विप्रियेकृते इतिसंचिंत्यदुर्मेधाधर्षयामासतत्पयः ५ तमाज्ञायमुनिःको
पंनचास्यचुकुपेतदा सतुक्रोधस्तमाहर्दंप्रांजलिर्मूर्तिमान्स्थितः ६ जितोस्मीतिभृगुश्रेष्ठभृगवोह्यतिरोषिणः
ने [illegible]थ्यापवादोयंयत्त्वयाऽस्मिपराजितः ७ सोहंत्वयिस्थितोह्यद्यक्षमावतिमहात्मनि बिभेमितपसःसा
सात्प्रसादंकुरुमेप्रभो ८ जमदग्निरुवाच साक्षाद्दृष्टोसिमेक्रोधगच्छत्वंविगतज्वरः नममापकृतंतेऽद्यनम
न्युर्विद्यतेमम ९ यासुद्दिश्येतिसंकल्पःपयस्यस्मिन्कृतोमया पितरस्तेमहाभागास्तेभ्योबुध्यस्वगम्यताम् १० इ
त्युक्तोजातसंत्रासस्तत्रैवांतरधीयत पितॄणामभिषंगात्तुनकुलत्वमुपागतः ११ सतान्प्रसादयामासशापस्यां
तोभवेदिति तैश्चाप्युक्तोयदाधर्मंसभायांकृष्णसन्निधौ १२ उंछवृत्तेःकथांब्रूषेतदामुक्तोभविष्यसि इत्यु
क्तोयाज्ञिकान्देशान्धर्मारण्यानिचैवहि १३ कृष्णस्यदर्शनाकांक्षीतंयज्ञंसमुपागतः धर्मपुत्रमथाक्षिप्य
सक्तुप्रस्थेनतेनसः १४ मुक्तःशापात्तथावृत्तंनवतस्यमहात्मनः पश्यतामेवनस्तत्रनकुलोंऽतरधीयत १५



CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

Digitized by Sarayu Foundation Trust, Delhi and eGangotri. Funding:IKS-MoE
Digitized by Sarayu Foundation Trust, Delhi and eGangotri

सचापिभगवान्कृष्णः शंखचक्रगदाधरः आसमासेर्जगन्नाथोयज्ञंरक्षितवान्हरिः १६ रक्षितासमहाबाहुः
पांडवैः पूजितश्चिरं रममाणः पुरेतस्मिन्नुवासदिवसान्बहून् १७ इत्याश्वमेधिकेपर्वणिजैमिनीयेनकुलोपा
ख्यानसमाप्तिर्नामसप्तषष्टितमोऽध्यायः ६७ जैमिनिरुवाच ततःकृष्णादयःसर्वेधर्मराजेनधीमता पूजिता
यादवास्तत्रनृपाश्चबहुमानिताः १ नरनारीमहीपालाःस्वानिसौख्यानिभेजिरे हर्षप्रमुदितालोकास्त्वासन्धर्मे
णपालिताः २ आश्वमेधिकमेतच्चपर्वतुभ्यंप्रकीर्तितम् शृण्वयास्यफलंराजन्सत्यंहिगदतोमम ३ धेनूनां
हिसहस्रेचदत्तेभवतियत्फलं तत्प्राप्नोतिसमग्रंयःशृणुयादाश्वमेधिकं ४ फलंशतगुणंतस्मात्कृत्वदःसम
श्रयान् गोदद्यात्सुसत्कंगांचब्राह्मणायगृहंश्रियं ५ गौरींवरयतेकन्यांनीलंवावृषमुत्सृजेत् आश्वमेधिकम
ध्यायंशृणु यद्यःसमौक्तितौ ६ यौवनाश्वमुखानांचनृपाणांचशुभाःकथाः शृणुयाच्छ्रावयेत्सोपिकलिदोषैर्न
लिप्यते ७ ब्राह्मणोलभतेविद्यांधनार्थीप्राप्नुयाद्धनम् क्षत्रियोजायतेशूरःप्राप्नुयाच्चपराजयम् ८ अपुत्रो
लभतेपुत्रंरोगीरोगैर्विमुच्यते अष्टादशपुराणानांपठनाद्यत्फलंभवेत् ९ तत्फलंसमवाप्नोतिभारतश्रवणान्नरः
संमग्रंभारतंतेनश्रुतंभवतिभारत १० यश्चाश्वमेधिकंसर्वंशृणुयाद्भावपूर्वकम् अस्मिन्पर्वणिराजेंद्रसमाप्ते
पूजनंशृणु ११ ब्राह्मणान्भक्ष्यभोज्यैश्चसंपूज्यवस्त्रभूषणैः अश्वोदेयःसुवर्णस्यदशकर्षैविनिर्मितः १२ म
त्स्यदोष्टपभोदेयस्तस्यपर्वफलंमहत् यथाशक्त्यथवाकार्योविधिःपर्वणियःस्मृतः १३ दानंदत्वानृपश्रेष्ठसंपू
र्णफलभाग्भवेत् चतुर्दशचपर्वाणिकथितानिविशांपते १४ अतश्चाश्रमवासाख्यंपर्वराजन्शृणुष्वतत् १५
इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिजैमिनीयेअश्वमेधश्रवणोत्तमफलश्रुतिवर्णनोनामाष्टषष्टितमोऽध्या
यः ६८ सदाशिवसुतोबापूर्होगिष्टेत्युपनामकः अश्वमेधंसोहमप्यामुज्जहाररशिलामये १
शुक्लेनभसिपंचम्यांपंचेर्स्वायेगुरोर्दिने शाकेद्विवस्त्रर्ष्यंतनामितेसंपूर्णतामगात् २ शुभंभवतु

१७८७

CC-0. UP State Museum, Hazratganj. Lucknow
CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow